श्रीः

श्रीमते हयग्रीवाय हरये नमः

श्रीमते रामानुजाय नमः

# श्री दाशरथि चरितम्

जग्गु शिङ्गरार्यविरचितम्

श्री विनायकमुद्रणालये महिशूरपुर्यांमुद्रितम्

१९५८

मूल्यम् ०-१२-०

श्रीमते हयग्रीवाय हरये नमः



श्रीमते रामानुजाय नमः

# श्री दाशरथि चरितम्

जग्गु शिङ्गरार्यविरचितम्

# विज्ञापनम्



अखिलाण्डकोटिब्रह्माण्डनायकस्य अनन्तदिव्याद्भुतमहिमायत्तनिखिलसुरासुरार्चितचरणकमलस्य श्रीयादवाद्रिशिखरालङ्कारभूतस्य श्रीमन्नारायणस्य करुणाकटाक्षपात्राणां श्रीहयग्रीवोपासनासादितविलसितवशीकृतसहृदयहृदयानां श्रीशिङ्गरार्याभिधानानां अस्मत्पितामहपादानां कृपाप्रभविनुबन्धेन विद्वज्जनाभिमताद्भुतप्रतिभासादितसाहित्यालङ्कारसांख्यवेदान्ताद्यनेकशास्त्रप्रवचनचतुराणां चन्द्रिकाचकोराद्यनेकग्रन्थनिर्माणनिपुणानां नानाप्रशस्तिविस्तृतयशःप्रकाशितदिगन्तानां श्रीवेङ्कटाचार्याभिधानानां अस्मत्पितृव्यपादानामनुग्रहेण च सामान्यतस्सम्पादितसंस्कृतसाहित्यपरिचयः श्रीमन्नारायणकटाक्षोपलब्धकवितासंपद्विभवः 'यदुशैलचम्पूं' कृष्णकथारहस्यं अन्यानि खण्डकाव्यानि च व्यरचयम् । ततः 'दाशरथिचरित' मित्येतत्काव्यमपि भगवत्प्रेरणयाऽरचयम् । अत्र प्रपञ्चत्रयात्मको विभागः कृतः, प्रथमप्रपञ्चे सर्वाणि पद्यानि अर्थान्तरन्यासालङ्काराङ्कितानि द्वितीयप्रपञ्चे यमकमयानि तृतीयप्रपञ्चे नानावृत्ताञ्चितानि च विराजन्ते । ग्रन्थारम्भे मङ्गलश्लोकरचनानन्तरं द्वितीयप्रपञ्चारम्भावसरेऽपि मङ्गलपद्यग्रथनस्य कारणं तु तद्व्याख्यानावसरेऽभिहितम् । अस्य व्याख्याने तु केवलमन्वयक्रमेण श्लोकलेखनमात्रमेवानुष्ठितं द्वितीयप्रपञ्चव्याख्याने तु तत्र तत्र संग्रहेण भावप्रकाशः कृतः ॥

अस्य ग्रन्थस्य निर्माणानुपदमेव मुद्रापयितुं बहुशः कृतप्रयत्नस्य दासस्य सुमहान् कालो वृथैव व्यतीतः । इदानीं तु निसर्गोपनतजराजीर्णशरीरस्यात्मन इवास्य ग्रन्थस्यापि जरामाभूदिति सङ्कल्प्य कथमपि मुद्रणोद्यमः कृतः अस्य मुद्रणाय काव्यरसादरमहितैः कतिपयैः महात्मभिः सामान्यतस्साह्यमुपपन्नम् । तेषां महात्मनां सन्निधौ चिरमहं कृतज्ञताभिनन्दनमर्पयामि ॥

एतादृशस्सर्वप्रयत्नस्य प्रयोजनं तु भगवन्मुखोल्लासनं किं च सहृदयाः विद्वांसः सर्वेऽपि संस्कृतकाव्यावलोकनलालसाः कृपयाऽवलोक्यैनं रसानुभवं कुर्वन्त्वित्येतदेव । किं च प्रचारार्होऽयं यदिग्रन्थः तस्याप्यानुकूल्यकल्पनेनोपकुर्वन्त्विति सविनयं प्रार्थये ॥

गच्छत्पदं स्खलति जातु तदत्र काव्ये
दोषाः प्रमादजनिताः कतिचिद्यदिस्युः ।
तान् सूचयन्ति मम ये सुहृदोऽनसूयाः
तेषां चिरादयमहं नितरां कृतज्ञः ॥

इति सुजनदासः
जग्गु शिङ्गरार्यः
ग्रन्थकर्ता

श्रीहयग्रीवाय नमः

श्रीमते रामानुजाय नमः



## अथ श्रीदाशरथिचरिते

### प्रथमः प्रपञ्चः

**देवैस्स्तुतो दुग्धपयोधितीरे रघोः कुले योऽजनि लोकभूत्यै ।**
**तं श्रेयसे नौमि हरिं प्रसन्नं ददाति तुष्टा ननु देवतेष्टम् ॥ १ ॥**

दुग्धपयोधितीरे देवैः स्तुतः लोकभूत्यै रघोः कुले यः अजनि तं प्रसन्नं हरिं श्रेयसे नौमि । तुष्टा देवता इष्टं ददाति ननु, तुष्टा देवता इष्टं ददाति इति वचनात् । अस्मिन् प्रथमप्रपञ्चे सर्वाणि पद्यानि अर्थान्तरन्यासालङ्कारग्रथितानि अन्येऽप्यलङ्कारा: तत्रतत्र वर्तन्ते ॥

**श्रीशिङ्गरार्यस्य कवेस्तनूजान्नारायणार्यात्प्रतिपन्नजन्मा ।**
**श्रीशिङ्गरार्यस्सृजतीह काव्यं पैतामहश्रीर्हि समेति पौत्रम् ॥ २ ॥**

श्रीशिङ्गरार्यस्य कवेः तनूजात् नारायणार्यात् प्रतिपन्नजन्मा श्रीशिङ्गरार्यः इह (इदानीं) काव्यं (दाशरथिचरिताख्यं काव्यं) सृजति । पैतामहश्रीः अत्र (कवितारूपसंपत् ) पौत्रं समेति हि–

**वचांसि सङ्कीर्तयतां पुनानं रामस्य वृत्तं मुनिभिः प्रगीतम् ।**
**शंसामि मन्दप्रतिभो मितोक्त्या किं कासरो नैति सरःकरीष्टम् ॥**

सङ्कीर्तयतां वचांसि पुनानं मुनिभिः प्रगीतं रामस्य वृत्तं मन्दप्रतिभः (अहं) मितोक्त्या शंसामि । करीष्टं सरः कासरः नैति किं ? (वश्यवाग्भिः

महर्षिभिः स्तूयमानस्य श्रीरामस्य पवित्रं चरित्रं मन्दमतिरहमपि स्तोतुं कथं प्रवृत्त इत्यत्रोच्यते) । (करीष्टं सरः कासरो नैति किं इत्यर्थान्तरन्यासोक्त्या समाधत्ते) । (वनकरिणां जलक्रीडायोग्ये सरसि वनमहिषोऽपि स्वेच्छया अवगाहत एवेति भावः) ॥

आसीन्नृपः कोसलनाम्नि देशे सूर्यान्वये पङ्क्तिरथो महात्मा ।
नाकाधिकस्तस्य रराज नीवृत् राज्याद्धि राज्ञो महिमा चकास्ति ॥

कोसलनाम्नि देशे सूर्यान्वये महात्मा पङ्क्तिरथः(दशरथोनाम) नृपः आसीत् तस्य नीवृत्(राज्यं)नाकाधिकः रराज । राज्ञो महिमा राज्यात् चकास्ति हि

ये सद्गुणास्सन्ति निधिःप्रजेशस्तेषां मणीनामिव सिन्धुरासीत् ।
दोषोऽस्पृशत्तं न यथा तमोऽर्कं कुलानुरूपो हि गुणो जनस्य ॥ ५

प्रजेशः (दशरथः) (लोके) ये सद्गुणास्सन्ति तेषां (सद्गुणानां) मणीनां सिन्धुरिव निधिरासीत् । (आकरो बभूव) तमः (अन्धकारः) अर्कं यथा नास्पृशत् तथा दोषः तं(नृपं)नास्पृशत् जनस्य गुणः कुलानुरूपः हि ॥

कौसल्यया केकयराजपुत्र्या सुमित्रयाऽप्येष कलत्रभोगः ।
भूयोऽवरोधेन चिरेण रेमे प्रायो नृपालाः बहुवल्लभाः हि ॥ ६

एषः(दशरथः)कौसल्यया केकयराजपुत्र्या सुमित्रयाऽपि कलत्रभोगः भूयोऽवरोधेन (अन्याभिः बह्वीभिः अन्तःपुरपुरन्ध्रीभिः सह)चिरेण रेमे । नृपालाः प्रायः बहुवल्लभाः हि ?

निर्विष्टभोगं श्लथयौवनं तं क्रमादसन्तानभवा नितान्तम् ।
चिन्ता ददाहानिशमन्तरङ्गे न संसृतावस्ति हि कोऽप्यनाधिः ॥ ७

निर्विष्टभोगं-(अनुभूतस्त्रीसुखं) क्रमात् श्लथयौवनं तं (नृपं) असन्तानभवा

चिन्ता अन्तरङ्गे अनिशं नितान्तं ददाह—संसृतौ कोऽपि अनाधिः(क्लेशरहितः) नास्ति हि—(संसारे सर्वेऽपि यया कयापि मनोव्यथया पीडिता एवेत्यर्थः)

**वसिष्ठमुख्याः मुनयो नृपालमचीकरन् पुत्रकृते वितानम् ।**
**पुंसोऽग्निजात्पायसमाप भूपः श्रद्धावतरिसद्ध्यति हि प्रयत्नः ॥ ८**

वसिष्ठमुख्याः मुनयः नृपालं पुत्रकृते वितानं अचीकरन् (कारयामासुः)—भूपः अग्निजात् पुंसः पायसमाप । श्रद्धावतः प्रयत्नः सिध्यति हि ?

**तत्पायसप्राशनतो वधूस्ताः दृष्ट्वा समाविष्कृतगर्भचिह्नाः ।**
**ममज्ज मोदाम्बुनिधौ सराजा दुरासदार्थाधिगमाद्धि तुष्टिः ॥ ९**

सः राजा तत्पायसप्राशनतः समाविष्कृतगर्भचिह्नाः ताः वधूः दृष्ट्वा मोदाम्बुनिधौ ममज्ज । दुरासदार्थाधिगमात् तुष्टिः(भवति) हि ?

**आद्या तु रामं सुषुवे सुमित्रा शत्रुघ्नमार्या सहलक्ष्मणेन ।**
**कैकेय्यसावीत् भरतं किमुक्त्या संपत्पुनस्संपदमभ्युपैति ॥ १० ॥**

आद्या तु (कौसल्यातु ) रामं सुषुवे—आर्या सुमित्रा लक्ष्मणेनसह शत्रुघ्नं सुषुवे । कैकेयी भरतमसावीत् । उक्त्या किं ?सम्पत् पुनः सम्पदं अभ्युपैति

**स्निग्धास्सुशीलाश्चतुरा वदान्या धीरा विनीतास्तनयास्तदीयाः ।**
**चत्वार एते स्वगुणैर्विरेजुः प्रायश्चकास्त्यङ्कुर एव शक्तिः ॥ ११**

तदीयाः चत्वारः एते तनयाः स्निग्धाः सुशीलाः चतुराः वदान्याः धीराः विनीताः (सन्तः)स्वगुणैर्विरेजुः प्रायः शक्तिः अंकुर एव चकास्ति ॥

**नृपस्स तेषामुचिते च काले विधाय चौलोपनयादि कर्म ।**
**अशिक्षयत्तान् गुणिनोऽपि विद्याः विद्याविहीनः पशुरेव नूनम् ॥**

स नृपः तेषां उचिते काले चौलोपनयादिकर्म विधाय गुणिनोऽपि तान्

विद्याश्च अशिक्षयत्—नूनं विद्याविहीनः पशुरेव । अत्र व्यतिरेकवृत्त्यार्थान्तर-न्यासः ॥

तं कौशिकोऽभ्येत्य नृपं मुनीन्द्रः सलक्ष्मणं बालमपि प्रसह्य ।
रामं ययाचे क्रतुरक्षणार्थं महात्मनां वेत्ति गुणान् महात्मा ॥ १३

कौशिकः मुनीन्द्रः तं नृपमभ्येत्य सलक्ष्मणं रामं बालमपि प्रसह्य क्रतुर-क्षणार्थं ययाचे । महात्मनां गुणान् महात्मा वेत्ति—(अहं वेद्मि महात्मानं रामं सत्यपराक्रमं) इति श्रीरामायणे ॥

श्रुत्वास्य वाचं सुतवत्सलोऽयं नृपो मुनेश्शापभयाकुलोऽपि ।
रामं तदा प्रेषयितुं न चैच्छत् स्नेहातिरेकः किल पापशङ्की ॥ १४

सुतवत्सलः अयं नृपः अस्य मुनेः वाचं श्रुत्वा शापभयाकुलोऽपि रामं तदा प्रेषयितुं न चैच्छत् । स्नेहातिरेकः पापशङ्की किल ?

तं सान्त्वयित्वा मुनिनायकोऽसौ लब्ध्वैव रामं सह लक्ष्मणेन ।
तपोवनं हृष्टमनाः प्रतस्थे सतां हि यत्नाः न वृथा भवन्ति ॥ १५

असौ मुनिनायकः तं(नृपं)सान्त्वयित्वा लक्ष्मणेन सह रामं लब्ध्वैव हृष्ट-मनाः तपोवनं प्रतस्थे । सतां यत्नाः वृथा न भवन्ति हि ॥

निहत्य रामः पथि ताटकां तन्मुनिप्रसादाधिगतास्त्रसङ्घः ।
हत्वा च रक्षांसि ररक्ष सत्रं पात्रेषु दत्ता हि फलन्ति विद्याः ॥

रामः पथि ताटकां निहत्य तन्मुनिप्रसादाधिगतास्त्रसङ्घः रक्षांसि हत्वा सत्रं ररक्ष च—पात्रेषु दत्ताः विद्याः फलन्ति हि ॥

प्रागेव रामाभ्युदये प्रवृत्तो मुनिस्स सीतां रघुनन्दनाय ।
दिदापयिष्यन् मिथिलां प्रतस्थे सन्तः परार्थैकपराः भवन्ति ॥ १७

प्रागेव रामाभ्युदये प्रवृत्तस्स मुनिः सीतां रघुनन्दनाय दिदापयिष्यन् मिथिलां प्रतस्थे सन्तः परार्थैकपराः भवन्ति ॥

शापादहल्यां पथि मोचयित्वा रामः श्रियं भूमिसुतामवाप्तुम् ।
शैवं धनुर्दुर्धरमप्यभाङ्क्षीत् प्राप्तुं श्रियं ह्यद्भुतकर्म कार्यम्॥ १८ ॥

रामः पथि अहल्यां शापान्मोचयित्वा श्रियं भूमिसुतामवाप्तुं दुर्धरमपि शैवं धनुरभाङ्क्षीत् । श्रियं प्राप्तुं अद्भुतकर्म कार्यं हि॥

सर्वांश्च तान् दाशरथीन् सुताभिः सीतादिभिः प्राप्तगृहस्तभावान् ।
ज्ञातानुगुण्यो जनकश्चकार सर्वानुरूपाद्धि सुखं विवाहात् ॥ १९

ज्ञातानुगुण्यः जनकः तान् सर्वान् दाशरथीन् च सीतादिभिः सुताभिः प्राप्तगृहस्थभावान् चकार । सर्वानुरूपात् विवाहात् सुखं हि ?

वधूसखान् पंक्तिरथस्स्वपुत्रान् विलोकयन् वीतनिमेषदृष्टिः ।
प्रहृष्टचेताः प्रययावयोध्यां पितुर्हि पुत्राभ्युदये प्रमोदः॥ २० ॥

पंक्तिरथः वधूसखान् स्वपुत्रान् वीतनिमेषदृष्टिः विलोकयन् प्रहृष्टचेताः अयोध्यां प्रययौ । पितुः पुत्राभ्युदये प्रमोदः हि ॥

क्षत्रान्तकोऽध्वन्यथ जामदग्न्यो रामस्त्वनादृत्य नृपं प्रणम्रम् ।
तुल्याह्वये क्रुद्ध इवाप रामं ससत्वमेवेच्छति सत्वशाली ॥ २१

अथ क्षत्रान्तकः जामदग्न्यः रामः अध्वनि प्रणम्रं नृपं तु अनादृत्य तुल्याह्वये क्रुद्ध इव राममाप सत्वशाली ससत्वमेव इच्छति ॥

स्त्रीमारणाज्जीर्णधनुर्विभङ्गात् दृप्तोऽसि वा चेत्त्वयि सत्वतत्वम् ।
चापेऽत्र मौर्वीं कलयेत्यगर्जत् दृप्तो हि नावैति परस्य सत्वम् ॥ २२

स्त्रीमारणात् (ताटकासंहारात्) जीर्णधनुर्विभङ्गात् दृप्तोऽसि वा (अथवा)

त्वयि सत्वतत्वं(सत्यपराक्रमः अस्ति) चेत् अत्र चापे मौर्वीं कलय इत्यगर्जत् दृप्तः परस्य सत्वं नावैति हि ॥

तं राघवश्चापमथ प्रणम्रं गुणानुषङ्गात् स्वमिव प्रकल्प्य ।
उच्चैर्गतिं तस्य रुरोध तेन वृथा न जल्पन्ति हि कार्यदक्षाः ॥ २३

अथ राघवः (श्रीरामः)तं चापं गुणानुषङ्गात् स्वमिव प्रणम्रं प्रकल्प्य (स्वं यथा सद्गुणानां सम्बन्धात् (विनयवान्) वर्तते तथा चापं मौर्वीबन्धनात् नतं विधाय) तेन (तच्चापकरणेन तच्चापमुक्तशरेणेति भावः) तस्य उच्चैर्गतिं(सर्वत्र-गमनशक्तिं रुरोध—कार्यदक्षाः वृथा न जल्पन्ति हि ॥

भीतो नृपःप्रागथ वीक्ष्य पुत्रं जयश्रियालिङ्गितमात्तहर्षः ।
प्रसाधितां प्राप पुरीमयोध्यां न कोऽप्युदर्कं प्रथमं हि वेत्ति ॥

नृपः प्राक् भीतः अथ जयश्रियालिङ्गितं पुत्रं वीक्ष्य आत्तहर्षः(सन् )प्रसा-धितां अयोध्यां पुरींप्राप । कोऽपि उदर्कं(उत्तरं फलं) प्रथमं नवेत्ति हि ॥

शत्रुघ्नयुक्तो भरतो गुरूक्त्या युधाजितस्सद्मनि मातुलस्य ।
सुख्यन्नुवास स्वगृहाविशेषं प्रेमाप्तबन्धोरमृताधिको हि ॥ २५ ॥

शत्रुघ्नयुक्तः भरतः गुरूक्त्या (पितुर्वचनात् ) मातुलस्य युधाजितः सद्मनि स्वगृहाविशेषं(यथातथा)सुख्यन् उवास ।आप्तबन्धोः प्रेमा अमृताधिको हि ॥

राजा जराजीर्णतनुः कदाचित् रामं समर्थं स्वपदेऽभिषिच्य ।
योगेन निश्रेयसमाप्तुमैच्छदमुत्रदृष्टिर्हि भवेद्विवेकी॥ ॥ २६ ॥

जराजीर्णतनुः राजा कदाचित् समर्थं रामं स्वपदे अभिषिच्य योगेन निश्रे-यसमाप्तुमैच्छत् । विवेकी अमुत्रदृष्टिः भवेत् हि ।

पुरोहितामात्यपुरप्रधानप्रभृत्युदारानुमतिप्रकर्षः ।
रामं स राजाऽयतताभिषेक्तुं प्रजानुमत्या हि सुराज्यभारः ॥ २७

सः राजा पुरोहितामात्यपुरप्रधानप्रभृतीनां उदारानुमतिप्रकर्षः (सन्) रामं अभिषेक्तुं अयतत । प्रजानुमत्या हि सुराज्यभारः ॥

**पौरादरं प्रेम च रामचन्द्रे निजेश्वरत्वं च निरूपयन् सन् ।**
**राज्याभिषेकाय स सन्ननाह सर्वर्द्धिसत्वे विभवोऽधिको हि ॥ २८**

सः (दशरथः) रामचन्द्रे पौरादरं रामचन्द्रे (आत्मनः) प्रेम च । निजेश्वरत्वं च निरूपयन् सन् राज्याभिषेकाय सन्ननाह । सर्वर्द्धिसत्वे विभवः अधिकः हि ॥

**प्रजान्तरङ्गेऽप्यथ रामहस्ते दृढं नृपः कौतुकमाबबन्ध ।**
**चित्रं किमप्यत्र न विद्यते यत् स्वस्य प्रियस्योत्सव आत्मनो हि**

अथ नृपः प्रजान्तरङ्गे रामहस्तेऽपि कौतुकं दृढमाबबन्ध । (प्रजानां मनसि कुतूहलं रामहस्ते प्रतिसरमाबबन्ध)अत्र चित्रं किमपि न विद्यते । यत्(यतः) स्वस्य प्रियस्य उत्सवः आत्मनः (उत्सवः) हि ॥

**कुब्जानृजुर्गात्र इवान्तरङ्गे कैकेय्युपघ्ना बत मन्थराख्या ।**
**पैशुन्यवाचात्र चकार विघ्नं व्याख्याति रूपं हि गुणान् जनस्य ॥**

गात्र इव अन्तरङ्गे अनृजुः कैकेय्युपघ्ना मन्थराख्या कुब्जा पैशुन्यवाचा अत्र विघ्नं चकार बत । जनस्य गुणान् रूपं व्याख्याति हि ॥

**तत्प्रेरितायाः भरतस्य मातुः क्षीरं यथाम्लेन तथान्तरङ्गम् ।**
**तदा विपर्यासमगच्छदुच्चैः कर्णेजपानां बलवान् हि मन्त्रः ॥ ३१**

तत्प्रेरितायाः भरतस्य मातुः अन्तरङ्गं अम्लेन क्षीरं यथा तथा तदा उच्चैः विपर्यासमगच्छत् । कर्णेजपानां मन्त्रः बलवान् हि ॥

**कैकेय्यवन्यां रुदती शयाना पत्यानुयुक्ता भरताय राज्यम् ।**
**रामस्य वासं च वने ययाचे निजेष्टसिद्ध्यै परुषाः हि नार्यः ॥**

कैकेयी रुदती । अवन्यां शयाना पत्या अनुयुक्ता (पृष्टा) भरताय राज्यं रामस्य वने वासं च ययाचे । नार्यः निजेष्टसिद्ध्यै परुषाः हि ।।

**राज्ञोऽथ सान्त्वोक्तिशतेऽपि तस्यां व्यर्थे विहायात्ममहं स रामः**
**सलक्ष्मणोऽगाद्वनमात्मपत्न्या श्रेयांसि नूनं बहुविघ्नवन्ति ।। ३३**

राज्ञः सान्त्वोक्तिशतेऽपि तस्यां (कैकेय्यां) व्यर्थे(सति) आत्ममहं (स्वपट्टाभिषेकोत्सवं) विहाय अथ रामः सः सलक्ष्मण(स्सन्) आत्मपत्न्या(सह) वनमगात् । श्रेयांसि बहुविघ्नवन्ति नूनम् ।।

**पौरान्विहायानुगतान्निशीथे सख्या गुहेनाथ कृतोपचारः ।**
**जटामतानीन्मृदुकेशपाशं क्लेशान्नभिभ्यत्यचलप्रतिज्ञाः ।। ३४**

अथ (रामः) अनुगतान् पौरान् निशीथे विहाय सख्या गुहेन कृतोपचारः मृदुकेशपाशं जटामतानीत् । अचलप्रतिज्ञाः क्लेशात् न बिभ्यति ।।

**वनं भरद्वाजमुनेः गतोऽसौ प्रणम्य तं तेन सुसत्कृतोऽभूत् ।**
**परस्परं प्रीतिमवापतुस्तौ सङ्गस्सतां सद्भिरुदेति पुण्यात् ।। ३५**

असौ(श्रीरामः)भरद्वाजमुनेः वनं गतः । तंप्रणम्य तेन सुसत्कृतः अभूत् । तौ परस्परं प्रीतिमवापतुः । सतां सद्भिः संगः पुण्यात् उदेति

**ततस्समासाद्य स चित्रकूटं साकेतसौख्यानि तृणाय मत्वा ।**
**हृष्टोऽवसल्लक्ष्मणजानकीभ्यां मनःप्रसादादधिकं सुखं किम् ।। ३६**

ततः सः चित्रकूटं समासाद्य साकेतसौख्यानि तृणाय मत्वा लक्ष्मणजानकीभ्यां(सह) हृष्टः अवसत् । मनःप्रसादादधिकं सुखं किम् ?

**पुत्रस्य विश्लेषशुचाऽथ राजा संतप्यमानोऽम्रियताचिरेण ।**
**क्षणेन सर्वं विपरीतमासीत् नूनं विधेरेव गरीयसीच्छा ।। ३७**

अथ राजा(दशरथः)पुत्रस्य विश्लेषशुचा संतप्यमानः अचिरेण अम्रियत । क्षणेन सर्वं विपरीतमासीत् । विधेः इच्छैव गरीयसी । नूनम् ॥

**अमात्यवाचा भरतोऽप्ययोध्यां प्राप्य प्रवृत्तिं सकलां निशम्य ।**
**निनिन्द तां मातरमप्यनार्यां पूज्यत्वहेतुस्सुगुणो हि नान्यत् ॥**

भरतोऽपि अमात्यवाचा अयोध्यां प्राप्य सकलां प्रवृत्तिं (वृत्तान्तं) निशम्य मातरमपि अनार्यां तां निनिन्द । सुगुणः हि पूज्यत्वहेतुः अन्यत् न (पूजाकारणम् ) न भवति ।

**निर्वर्त्य सर्वाण्यथ पैतृकानि कर्माण्यनङ्गीकृतराज्यसंपत् ।**
**रामं समानेतुमगादरण्यं धर्मात्मनां न्याय्यपथे हि दृष्टिः ३९ ॥**

अथ(भरतः)सर्वाणि पैतृकानि कर्माणि निर्वर्त्य अनङ्गीकृतराज्यसम्पत्(सन्) रामं समानेतुं अरण्यमगात् । धर्मात्मनां न्याय्यपथे दृष्टिर्हि ॥

**दृष्ट्वा भरद्वाजमुनिर्वनान्तस्समागतं तं भरतं ससैन्यम् ।**
**दिव्यं तथातिथ्यममुष्य चक्रे कैर्नाद्रियन्ते सुजनाः गुणज्ञैः ॥ ४०**

भरद्वाजमुनिः वनान्तरस्समागतं ससैन्यं तं भरतं दृष्ट्वा दिव्यं तथा आतिथ्यममुष्य चक्रे । सुजनाः गुणज्ञैः कैः नाद्रियन्ते ॥

**नीत्वा दिनं तद्युगकल्पमग्रे रामं विचिन्वन्नथ चित्रकूटम् ।**
**सोऽयं जगाहे त्वरमाणचेताः प्राप्तव्यमप्राप्य कुतोऽस्ति शान्तिः ॥**

सोऽयं (भरतः) तत् दिनं युगकल्पं नीत्वा अग्रे रामं विचिन्वन् त्वरमाणचेताः अथ चित्रकूटं जगाहे । प्राप्तव्यं अप्राप्य शान्तिःकुतः अस्ति ॥

**दृष्ट्वाग्रजं लक्ष्मणसेव्यमानं सीतासखं चीरजटाधरं तम् ।**
**शोकं मुदं तत्र समं स भेजे शुचे मुदे चापदि बन्धुयोगः ॥ ४२**

सः (भरतः)लक्ष्मणसेव्यमानं सीतासखं चीरजटाधरं तं अग्रजं(श्रीरामं) दृष्ट्वा तत्र शोकं मुदं समं भेजे । आपदि बन्धुयोगः शुचे मुदे च (भवति)

**श्रुत्वाऽथ रामोऽपि पितुः प्रवृत्तिं जलाञ्जलिं तस्य शुचार्पयित्वा ।**
**अस्यानुजस्यागमनाज्जहर्ष सोदर्यजा प्रीतिरकृत्रिमा हि ॥ ४३ ॥**

अथ रामोऽपि पितुः प्रवृत्तिं श्रुत्वा शुचा तस्य जलाञ्जलिमर्पयित्वा अस्यानुजस्य (भरतस्य) आगमनात् जहर्ष । सोदर्यजा प्रीतिः अकृत्रिमा हि ? ॥

**प्रणामपूर्वं भरतेन भूयस्संप्रार्थितो राज्यभराय रामः ।**
**सत्यप्रतिज्ञो बत नानुमेने सेव्यं सतामाश्रुतमाप्तवर्गात् ॥ ४४ ॥**

राज्यभराय भरतेन भूयः प्रणामपूर्वं संप्रार्थितः सत्यप्रतिज्ञः रामः नानुमेने बत । सतां आश्रुतं (प्रतिज्ञातं) आप्तवर्गात् (इष्टजनामीप्सापेक्षया) सेव्यं (अनुष्ठेयं)

**श्रीरामदास्यैकरतो महात्मा तत्पादुकाप्तया परिपूर्णकामः ।**
**पुरीं प्रपेदे भरतः प्रहृष्टः स्वेष्टात् सतामार्यवचः प्रमाणम् ॥ ४५**

श्रीरामदास्यैकरतः महात्मा भरतः तत्पादुकाप्तया (तस्य पादुकाप्राप्तया) परिपूर्णकामः प्रहृष्टः पुरीं प्रपेदे । सतां स्वेष्टात् आर्यवचः प्रमाणम् ॥

**चीरं जटां राम इव स्वयं च बिभ्रन्महात्मा व्रतकर्शितांगः ।**
**प्रासादवासं प्रजहौ कुटीस्थो न स्वामिभक्ताः स्वसुखेऽनुषक्ताः ॥**

महात्मा (भरतः)राम इव स्वयं च चीरं जटां च बिभ्रत् । व्रतकर्शितांगः कुटीस्थः प्रासादवासं प्रजहौ । स्वामिभक्ताः स्वसुखे अनुषक्ताः न भवन्ति

**पश्चात्सकेकयसुतातनयो महात्मा**
**रामाभिषेचनधियं जनयन् प्रजानाम् ।**

**ते पादुके विभवतोऽभिषिषेच राज्ये**
**संबन्धि वस्त्वपि हि पूज्यजनस्य वन्द्यम् ॥ ४७ ॥**

पश्चात् महात्मा सः केकयसुतातनयः प्रजानां रामाभिषेचनधियं जनयन् । ते पादुके राज्ये विभवतः अभिषिषेच । पूज्यजनस्य संबन्धिवस्त्वपि वन्द्यं हि

**नन्दिग्रामे सविधि भरतो रत्नपीठेऽर्चिताभ्यां**
**रामायेव प्रतिदिनमसौ पादुकाभ्याममूभ्याम् ।**
**विज्ञाप्यैवाकुरुत सकलं राज्यकृत्यं निरीहः**
**शुद्धात्मानो मनसि बहिरप्येकरूपा भवन्ति ॥ ४८ ॥**

असौ भरतः नन्दिग्रामे रत्नपीठे सविधि (विधिवत् ) अर्चिताभ्यां अमूभ्यां पादुकाभ्यां प्रतिदिनं रामायेव सकलं राज्यकृत्यं विज्ञाप्यैव निरीह (स्सन् ) अकुरुत । शुद्धात्मानः मनसि बहिरपि एकरूपाः भवन्ति ॥

इति दाशरथिचरिते जगद्गुरुशिङ्करार्यविरचिते अर्थान्तरन्यासमरः
पादुकापट्टाभिषेको नाम प्रथमः प्रपञ्चः



अथ दाशरथिचरिते

## द्वितीयः प्रपञ्चः

**दशरथान्वयमङ्गलशेवधिं दशमुखारिमनन्तमजं विभुम् ।**
**जनकजादयितं हरिमाश्रये सुमनसां मनसां सुखदायकम् ॥ १ ॥**

दशरथान्वयमङ्गलशेवधिं(दशरथवंशस्य मङ्गलानां निधिं)दशमुखारिं(त्रिलोककण्ठकस्य रावणस्य संहर्तारं अनेन तपोबलात् तृणीकृतसर्वलोकं रावणमपि हन्तुं अयमेक एव समर्थः इति सूचितः) अनन्तं अजं विभुं (एतैर्विशेषणैः

(विमुक्तलालसः) इह गिरौ निवस्तुं कुतुकी अभूत् । (राज्यश्रीसमनुभवस्य वनवासानुभवस्य च समानौत्सुक्यवान् अत्रत्य रामणीयकतातिशयेन अत्रैव निवस्तुं कुतुकी अभूत् ) इति भावः ॥

**स्वशरणागतरक्षणदक्षताप्रकटनाय महागसि वायसे ।**
**रघुवरोऽवसदत्र समुल्लसच्छमदमो मदमोहनिरासकः ॥ ७ ॥**

समुल्लसच्छमदमः मदमोहनिरासकः रघुवरः(श्रीरामः)महागसि वायसे स्वशरणागतरक्षणदक्षताप्रकटनाय अत्र(अस्मिन् चित्रकूटे)अवसत् । (अत्र चित्रकूटपर्वते निवासस्य प्रयोजनं तु एतदेव (अन्तः पुरा)ऽपराधकर्तुः महागसः अपि काकस्य विषये स्वकीयशमदमादिगुणातिशयेन दयां करिष्यन् । तस्य काकस्य मदं मोहं च निवर्तयिष्यत् श्रीरामः तं काकं रक्षिष्यतीति । **सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतत् व्रतं मम ॥** इत्युक्तः किल श्रीरामस्वभावः)

**मसृणपीनविशालसमस्थलाः सदृशरूपतरुद्वयमध्यगाः ।**
**रघुपतेरुपभोगकृते शिलाः अकृतकाः कृतका इव रेजिरे ॥ ८**

मसृणपीनविशालसमस्थलाः सदृशरूपतरुद्वयमध्यगाः अकृतकाः(स्वभावजाः) शिलाः रघुपतेरुपभोगकृते कृतका इव(प्रयत्नपूर्वकं शिल्पिभिर्निर्मिता इव)रेजिरे (प्राकाशन्त)

**रघुपतिं गिरिसानुषु जानकीसहचरं सुकृती सतु लक्ष्मणः ।**
**उपचचार च चारवदात्मवित्तदनुजो दनुजोदयविद्विषम् ॥ ९**

सुकृती(वनवासावसरेपि राममनुसृत्य तत्सेवानिरतस्वभाववत्वात् )आत्मवित् (स्वशेषत्वस्वरूपज्ञानवान् ) तदनुजः लक्ष्मणस्तु गिरिसानुषु जानकीसहचरं दनुजोदयविद्विषं रघुपतिं चारवत् उपचचार च(' **भवांस्तु सह वैदेह्या गिरि-**

सानुषु रंस्यते । अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते ॥' इति खलु लक्ष्मणस्य प्रतिज्ञावचनम् )

वनलताशतगुम्भितमण्डपप्रतिमकुञ्जतले कुसुमोच्चये ।
रहसि वल्लभया सहितो दधावकृतके कृतकेलिरसौ मुदम् ॥ १०

असौ (श्रीरामः) कुसुमोच्चये अकृतके (स्वयमेवसमद्भूते) वनलताशतगुम्भितमण्डपप्रतिमकुञ्जतले(वनलताशतैर्गुम्भितं च मण्डपाः प्रतिमाः यस्मिन् तत् च कुञ्जतलं तस्मिन् ) रहसि वल्लभया सहितः कृतकेलिः मुदं दधौ ॥

समवगाह्य जले सरितोऽन्वहं प्रभुरसावमितां मुदमाददे ।
जनकजोत्कुचरम्यतनुश्रियं कमलिनीमलिनीलमुखीं स्पृशन् ॥

असौ प्रभुः (श्रीरामः) सरितः (मन्दाकिन्याः) जले अन्वहं समवगाह्य जनकजोत्कुचरम्यतनुश्रियं अलिनीलमुखीं कमलिनीं स्पृशन् अमितां मुदमाददे (जलावगाहनावसरेऽपि सीताया इव मनोहरायाः कमलिन्याः प्राप्तया अमितः प्रमोदः) ॥

सिततनुद्युतिभासितकाननान् परिचयादुटजान्तिकमागतान् ।
परिहरन्नटतिस्म रघूद्वहश्शशशिशून् शशिशून्यनिशास्वपि ॥ १२

रघूद्वहः सिततनुद्युतिभासितकाननान् (अत्यन्तधवलशरीरत्वात् अन्धं तमस्यपि प्रकाशमानान्) परिचयात् उटजान्तिकमागतान् (निर्भयेन सर्वत्र-चरतः इति भावः) शशशिशून् शशिशून्यनिशास्वपि (अमावस्यानिशास्वपि परिहरन् अटतिस्म । (शशशिशूनां आत्मपदाघातपीडा यथा न भवेत् तथा ऽव्यग्रगमनः अटतिस्म ॥

अथ कदाचिदमेयपराक्रमो वनविहारसमुत्सुकमानसः ।
रघुपतिः प्रियया सहितो वनेऽभ्रमदसौ मदसौरभनागवत् ॥ १३

अथ अमेयपराक्रमः असौ रघुपतिः कदाचित् वनविहारसमुत्सुकमानसः (सन्) प्रिययासहितः वने मदसौरभनागवत् (मदजलगन्धसुरभिलगजराज इव) (अनेन श्रीरामस्य प्रहृष्टचित्तत्वं सर्वस्वतन्त्रत्वं च सूचितं) अभ्रमत् ॥

**समवलोक्य वनश्रियमद्भुतां शशिमुखीं दयितां प्रति राघवः ।**
**प्रमुदितो निजगाद वचश्शनैर्मधुरसाधुरसादृतमुत्स्मितः ॥ १४**

राघवः अद्भुतां वनश्रियं समवलोक्य प्रमुदितः शशिमुखीं दयितां प्रति मधुरसाधुरसादृतं(मधुरं च साधु च रसादृतं च)(तादृक्)वचः उत्स्मितः(सन्) शनैः निजगाद ॥

**गिरिममुं सखि ! पश्य मनोहरं नयनयोस्सफलत्वमिहाप्यते ।**
**कुतुककारिभिरुत्तमवस्तुभिर्नगरसङ्गरसं विनिहन्ति यः ॥ १५**

(हे)सखि मनोहरं अमुं गिरिं पश्य इह नयनयोस्सफलत्वं आप्यते । यः (योऽयं पर्वतः) कुतुककारिभिः उत्तमवस्तुभिः नगरसङ्गरसं (नगरसम्बन्धप्रेमातिशयं) विनिहन्ति । (नगरेषु प्रयत्नपूर्वकं निर्मितेभ्योऽपि वस्तुभ्यः स्वभावत एवाधिकरमणीयानि वस्तूनि अत्र परिदृश्यन्त इति भावः)

**सुदति ! काचन पूर्णजलाऽमला वहति पश्य सरित्परितोगिरिम् ।**
**मधुरमम्बु यदीयमपेक्ष्यते नवसुधा वसुधामिव संश्रिता ॥ १६**

हे सुदति ! पूर्णजला अमला काचन सरित्(मन्दकिन्याख्या नदी) गिरिं परितः वहति पश्य । मधुरं यदीयमम्बु वसुधां संश्रिता नवसुधेव [जनैः] अपेक्ष्यते ॥

**अयि ! सरोजदलायतलोचने ! प्रहिणु दृष्टिमितोऽत्र सरोवरे ।**
**अनुकरोति दृशोस्तव चारुतां तरुणताऽरुणतामरसश्रियः ॥ १७**

अयि ! सरोजदलायतलोचने ! दृष्टिं इतः प्रहिणु । अत्र सरोवरे अरुणतामरसश्रियः तरुणता तव दृशोः चारुतामनुकरोति (तव दृशोस्सौन्दर्यानुकरणसामर्थ्यं तदात्व एव विकसिततरुणतामरसानामेव इति भावः]

इह विलोकय बालमृगेक्षणे ! सितगरुत्पृथुकैर्मुहुरश्रमम् ।
अमितरूढसरोरुहमण्डिताद्बिसरसस्सरसस्समवाप्यते ॥ १८ ॥

हे बालमृगेक्षणे ! इह विलोकय । अमितरूढसरोरुहमण्डितात् सरसः बिसरसः सितगरुत्पृथुकैः (हंसशावकैः) अश्रमं(यथातथा)मुहुः समवाप्यते । (अनुत्पन्नग्रहणशक्तीनां हंसशावकानामपि अतिसौलभ्येन लब्धुं यावन्ति समृद्धानि तावन्ति बिसान्यत्र सन्तीति भावः) ॥

वरटयार्पितमत्र बिसं मुहुर्वदनचुम्बनलोभवशात्प्रियः ।
असकृदीषददन्न करोति वा सरसि कं रसिकं मदविह्वलम् ॥ १९

अत्र सरसि वरटया (हंसपत्न्या) मुहुः अर्पितं बिसं प्रियः (तत्पतिर्हंसः) वदनचुम्बनलोभवशात्(पत्नीमुखचुम्बनलालसातिशयेन) असकृत् ईषत् (किञ्चित् किञ्चिदेव) अदन् कं रसिकं वा मदविह्वलं न करोति ।(रसिकजनानां सर्वेषां चमत्कृतिं जनयतीति भावः)

सरसिजान्यपचित्य मया करे तव कृते विधृतान्ययिसुन्दरि ।
परिचितास्समवेक्ष्य करैस्स्वयं दधुरिमे धुरि मे करिणोऽम्बुजम् ॥

अयि सुन्दरि ! तव कृते अपचित्य मया करे विधृतानि सरसिजानि परिचिता इमे करिणः समवेक्ष्य स्वयं करैः अम्बुजं(जात्यैकवचनं)मे धुरि दधुः । (वयमपि भवानिव राजीवदानतोषितपत्नीविहरणचतुराः इति इमे करिणो मां वदन्तीवेति भावः) ॥

नवलताः प्रविहाय सुमाश्रिताः कमलगन्धिनि ! पश्य समन्ततः ।
समुपयान्त्यलयोऽत्र मुखाम्बुजं मृदुरवा दुरवापमिदं तव ॥ २१ ॥

भो कमलगन्धिनि ! अत्र(अस्मिन् प्रदेशेतु)मृदुरवाः अलयः सुमाञ्चिताः नवलताः प्रविहाय दुरवापं इदं तव मुखाम्बुजं समन्ततस्समुपयान्ति पश्य । (प्रथमं तावत् नानाविधलतानां कुसुमेषु मकरन्दपाननिरताः इमे भ्रमराः अत्र त्वदागमनानुपदमेव तानि सुमान्युज्झित्य त्वन्मुखे सौरभ्यातिशयेन अत्रागच्छन्तीति भावः) ॥

**इह कपोतयुवा निजवल्लभां गलतलोन्नतिकूजितवल्गनैः ।**
**रतिकृतेऽनुनयन् प्रणयातुरो मदयिता दयिताजनलालसान् ॥ २२**

इह (अस्मिन् स्थले तु) प्रणयातुरः कपोतयुवा गलतलोन्नतिकूजितवल्गनैः (स्वभावोक्तिरत्र) निजवल्लभां रतिकृते अनुनयन् दयिताजनलालसान् मदयिता (पत्न्या सह विहर्तुं कपोतेन क्रियमाणाः शृङ्गारचेष्टाः विलोक्य दयिताजनलालसानां हृदयं प्रक्षुब्धं भवतीत्यर्थः) ॥

**इह तरौ स्वशिशून् शुकदम्पती सरुतकम्पितकण्ठतलान्मुहुः ।**
**फलरसैरलसावपि पोषितान् वितनुतोऽतनुतोषहृतश्रमौ ॥ २३**

इह तरौ शुकदम्पती सरुतकम्पितकण्ठतलान् स्वशिशून् अलसावपि (अनेकवारं आहारसंग्रहणार्थं दूरपर्यटनात् अलसौ तथापि) अतनुतोषहृतश्रमौ (सन्तौ)(शावकपरिपोषणसन्तोषातिशयेनाज्ञातपरिश्रमौ)मुहुः फलरसैः पोषितान् वितनुतः ॥

**वलयितायतकण्ठतलश्शिखी निबिडपिञ्छसमीकरणोत्सुकः ।**
**दयितया कृतसाह्य इह प्रिये विभजते भजते च मुदं मुहुः ॥ २४**

हे प्रिये ! इह शिखी (मयूरः) निबिडपिञ्छसमीकरणोत्सुकः (अत एव) वलयितायतकण्ठतलः (सन्) दयितया कृतसाह्यः (पिञ्छानि) विभजते मुहुः मुदं च भजते । (आत्मनि पत्नीप्रेमातिशयेन च पुंसः स्वस्यैव दीर्घतर-

निबिडपिञ्छानि सन्तीति मदेन च मुहुर्मुदं भजते)

**स्वदयितां धृतगर्भभरां विदन् प्रसवनीडविनिर्मितिकौतुकः ।**
**कुरर एष तृणैर्मृदुभिर्गृहं दयितयाऽयि ! तया कुरुते प्रिये ॥ २५**

अयि प्रिये एष कुररः (पक्षिविशेषः) स्वदयितां धृतगर्भभरां विदन् प्रसवनीडविनिर्मितिकौतुक(स्सन्)तया दयितया(सह)मृदुभिः तृणैः गृहं कुरुते ।

**निबिडवृक्षशतापहृतातपे समतले नवघासमनोहरे ।**
**विगतभीतिकथाः कलभाषिणि प्रसृमरास्सृमरा इह शेरते ॥ २६**

(भोः) कलभाषिणि ! इह निबिडवृक्षशतापहृतातपे नवघासमनोहरे समतले सृमराः (हरिणविशेषाः) विगतभीतिकथाः (भयमेव अजानानाः) (अत एव) प्रसृमराः (सर्वत्रव्याप्ताः) शेरते ॥

**प्रसववेदनया क्षुभितां प्रियां रसनया विलिहन् हरिणोऽनुगः ।**
**अचिरजार्भकवत्सलया तया गतरुजा तरुजालभुवीक्ष्यते ॥ २७**

(अत्र) हरिणः प्रसववेदनया क्षुभितां प्रियां रसनया विलिहन् अनुगः (सन्) अचिरजार्भकवत्सलया गतरुजा तया (पत्न्या) तरुजालभुवि ईक्ष्यते । (आमनस्यव्यपगमनं पुत्रजननहर्षं च दृशैव निवेदयन् पतिं प्रेम्णा पश्यतीति भावः) ॥

**सुमुखि ! सूकरयूथपतिस्स्वकैः किटिकुलैः कृतघुर्घुरनिस्वनः ।**
**इह हि पल्वलपङ्कविलेपनैरशुचिराशुचिरान्न विशुध्यति ॥ २८**

हे सुमुखि ! इह हि सूकरयूथपतिः स्वकैः किटिकुलैः(समं)कृतघुर्घुरनिस्वनः पल्वलपङ्कविलेपनैः आशु अशुचिः(भवति)चिरात् न विशुध्यति । (स्वभावत एव अतिशीघ्रं शरीरं मलिनं करोति चिरादपि नैवशुध्यति । सूकराणां स्वाभाविकमालिन्यं प्रसिद्धमिति भावः)

वटतरोर्विटपेष्वपि कोटरेष्विह खगाः प्रतिसायमपि प्रिये ! ।
वसतिभूकलहात् बत कुर्वते ध्वनिभृतं निभृतं विपिनस्थलम् ॥

हे प्रिये ! इह प्रतिसायमपि वटतरोर्विटपेषु कोटरेष्वपि खगाः वसतिभूकलहात् निभृतं (निश्शब्दं) विपिनस्थलं ध्वनिभृतं (शब्दपूर्णं) (सत्) कुर्वते बत आश्चर्यम् ) ॥

(सायंकाले बहवः पक्षिणः अत्र निर्भयप्रदेश इति प्रत्ययात् अमुं वटतरुमेत्य शाखासु कोटरेष्वपि निवसति संपादनार्थं यतमानाः स्थलसंकोचात् कलहायमानाः उच्चतररुतेन निश्शब्दं वनप्रदेशं शब्दपूर्णं कुर्वते)

फलितलोहितशाखमुदुंबरं
तरुममुं लघुलङ्घनचेष्टितः ।
व्रजति सोऽत्ति फलं क्षिपति क्षितौ
कपिचयोऽपि च योऽत्र वने स्थितः ॥ ३० ॥

अपि च अत्र वने यः कपिचयः स्थितः सः फलितलोहितशाखममुमुदुम्बरं तरुं लघुलङ्घनचेष्टितः (सन् ) व्रजति । फलमत्ति क्षितौ(च)क्षिपति । (अत्र वानराः निजस्वभावानुगुणचेष्टाः स्वादुतरोदुम्बरफलप्राप्त्या प्रहर्षेण अतोऽप्यतिशयचेष्टाः शाखासु लघुलङ्घनं फलभक्षणं क्षितौ फलक्षेपणं च कुर्वन्तः क्रीडन्ति पश्येत्यर्थः)

समवलोकय लोलविलोचने ! व्रततिगूढनिकुञ्जतलेष्वमी ।
नखरखातबिलेषु सशावकाः कुशलिनश्शलिनस्त्विह शेरते ॥ ३१

हे लोलविलोचने ! इह समवलोकय । अमी शलिनस्तु (शल्याः शलानि एतेषु सन्तीति शलिनः) व्रतति गूढनिकुञ्जतलेषु नखरखातबिलेषु सशावकाः कुशलिनः (भयवर्जं सौख्येन) शेरते ॥

कृशकटिर्बलवान् मृगराजतां प्रकटयन्नवलोकनभङ्गिभिः ।
विरचयन्निह गर्जति केसरी मृगमनो गमनोन्मुखजीवितम् ॥ ३२

कृशकटिः बलवान् केसरी इह अवलोकनभङ्गिभिः मृगराजतां प्रकटयन् मृगमनः गमनोन्मुखजीवितं विरचयन् गर्जति । (अत्यन्तसूक्ष्मावलग्नः मद-गजसंहारेपि समर्थः गम्भीरतरविलोकनेन स्वमृगाधिपतित्वं व्यञ्जयन् केसरी इह गर्जनेन वन्यमृगाणां प्राणापायभयमुत्पादयति पश्य) ॥

रमणि ! तत्र विलोकय दूरतो विततवक्त्रगुहो बृहदाकृतिः ।
अजगरो वनसत्वमुपागतं स्वयमयं यमयन्त्रितमश्नुते ॥ ३३ ॥

हे रमणि ! तत्र दूरतः विलोकय । विततवक्त्रगुहः बृहदाकृतिः अज-गरोऽयं यमयन्त्रितं (मृत्युप्रेरितं) (अत एव) स्वयं उपागतं (निजवदनसमीपं स्वत एवोपागतं) वनसत्वं (वन्यप्राणिनं) अश्नुते ॥

निशि गुहासु विशालशिलातले कृतसुमास्तरणे शबराङ्गनाः ।
द्युतिलतारुचिरे रमयन्त्यहो प्रियतमान्यतमानरतक्रियान् ॥ ३४

(अत्र) गुहासु कृतसुमास्तरणे द्युतिलतारुचिरे विशालशिलातले शबरा-ङ्गनाः निशि यतमानरतक्रियान् प्रियतमान् रमयन्ति । अहो(स्वत एव आत्मो-पभोगसौकर्यानुकूल्यमनोहरप्रदेशे शबराङ्गनाः प्रियतमैस्समं अत्र स्वेच्छया विहरन्तीति भावः)

गतवया अपि कोऽपि युवेव नः पुरत एति दृढश्शबरोसितः ।
अचिरकृत्तमसृग्युतमुच्छ्रितं गजरदं जरदंसतले वहन् ॥ ३५ ॥

गतवयाः अपि युवेव दृढः असितः कोऽपि शबरः अचिरकृत्तं असृग्युतं उच्छ्रितं गजरदं जरदंसतले वहन् नः पुरतः एति (पश्य) ॥

**वनमिदं प्रथमं समुपागताः त्रिदिवसीमवसाम सकौतुकम् ।**
**पदतले सखि यस्य तरोरयं स किल कोकिलकोककुलाकुलः ॥ ३६**

हे सखि ! इदं वनं प्रथमं समुपागताः (वयं) यस्य तरोः पदतले सकौतुकं त्रिदिवसीमवसाम । कोकिलकोककुलाकुलः अयं स किल (स एव वृक्षः किल) (हे सखि एतदरण्यप्रवेशावसरे प्रथमं अत्यन्तरामणीयकतया यस्य तरोरधः सकौतुकं त्रिदिवसीमवसाम । कोकिलकोकादिपक्षिगणनिवासभूः मनोहरः अयं वृक्षः स एव वृक्षः किल) श्रीरामः (सकौतुकं प्रथममनुभूतं मञ्जुलप्रदेश-विहरणसौख्यं पुनः तत् स्थानदर्शनात् सीतां स्मारयति इति भावः)

**हृदयहारिनिकुञ्जगुहादिभिः गिरिरसावभिकप्रियकृद्यथा ।**
**सखि ! तथैव विशुद्धसुसिद्धिभूः प्रतपसां तपसामपि साह्यकृत् ॥**

हे सखि असौ गिरिः हृदयहारिनिकुञ्जगुहादिभिः यथा अभिकप्रियकृत् (कामुकानामानन्दाभिवर्धको वर्तते) तथैव विशुद्धसुसिद्धिभूः (अयं चित्रकूट-गिरिः) प्रतपसां (प्रकृष्टतपोनिरतानां मुनिवराणां) तपसामपि साह्यकृत् (वर्तते) (अयं गिरिः इहपरलोकसकलसौख्यप्रदप्रदेश इति भावः) ॥

**नगरसौख्यरतान्धधियो जनाः वनसुखे मुनिभिः किल वञ्चिताः**
**यदिह पूतमनोहरवस्तुभिर्नवनवैर्वनवैभवमाप्यते ॥ ३८ ॥**

नगरसौख्यरतान्धधियो जनाः वनसुखे (अरण्यसौख्यविषये) मुनिभिः वञ्चिताः किल यत् (यस्मात् कारणात्) इह (वने) नवनवैः पूतमनोहरवस्तुभिः वनवैभवं (वनवासिभिः आप्यते (नगरस्थवस्तुषु पूतत्वं नवनवत्वं च दुर्लभ-मिति भावः)

**सहचरी त्वमिहासि च लक्ष्मणो निपुणधीरनुगो मम पालकः ।**
**गिरिरयं सुमनोहर इत्यहो दिवि सुखं विसुखं परिदृश्यते ॥ ३९**

त्वं इह मम सहचर्यसि निपुणधीः(अस्मच्छन्दानुरोधेन उपचारकरणे चतुरः) अनुगः (वनेऽपि आवामनुसृत्य अस्मत्सेवारतः) लक्ष्मणः मम पालकः (पालक-शब्देन लक्ष्मणे गौरवातिशयो व्यज्यते) (अस्ति) अयं गिरिश्च सुमनोहरः इति (हेतुभिः) दिवि (विद्यमानं) सुखं विसुखं परिदृश्यते अहो ॥

**विरचिता मयि मध्यमयाम्बया तनयवत्सलता बलवत्तरा।**
**इह यतोऽनुभवामि सुखं त्वया कुसुमितासु मितानिलभूमिषु ॥**

(एवमभूतपूर्वसुखप्राप्तेः कारणभूतां मध्यमाम्बामिदानीं स्तौति) मध्यमया अम्बया (कैकेय्या) मयि बलवत्तरा तनयवत्सलता विरचिता यतः (यस्मात् कारणात्) इह (अस्मिन् पर्वते) कुसुमितासु मितानिलभूमिषु (सौरभ्यमान्द्य-युतमारुतमनोहरस्थलीषु) त्वया (सह) सुखमनुभवामि ॥

**सुखिनमप्ययि मामिह मातरो विपिनदुःखकृशं पुरि मन्वते ।**
**निजसुखैकरतो बत तादृशां गतनयस्तनयः कथमस्मि वा ॥ ४१**

(अथ सर्वासां मातॄणां प्रेमातिशयस्मरणपूर्वकं स्वस्य स्वार्थपरत्वं निन्दति) अयि (सीते) इह सुखिनमपि मां पुरि (अयोध्यायां विद्यमानाः) मातरः विपिनदुःखकृशं (सन्तं) मन्वते । निजसुखैकरतः (अत एव) गतनयः(अहं)तादृशां (सततमपि अस्मच्चिन्तानिरतानां मातॄणां) कथं वा तनयोऽस्मि बत(खेदे) ॥

**निजमनोरथसिद्धिमनाशयन्ननवकीर्णिनमारचयंश्चमाम् ।**
**प्रमुदितोऽद्य पुरे मम पादुके विनयवान्नयवान् भरतोऽर्चति ॥**

(ततः प्रियतमस्य भरतस्य स्मरणात् तं स्तौति) विनयवान् नयवांश्च[अस्मदाज्ञानुवर्तकः राज्यभारनिर्वहणार्थं मम पादुकाप्रतिनिधीकरणे प्रतिभां उपयुञ्जन् च विनयवान् नयवान् ) भरतः निजमनोरथसिद्धिमनाशयन् मां च अनवकीर्णिनं (अक्षतव्रतं सन्तं) आरचयन् प्रमुदितः पुरे अद्य मम पादुके अर्चति ॥

प्रकृतिपालनदक्षमतन्द्रितं भरतमेत्य सुधार्मिकमीश्वरम् ।
अनुभवन्ति हि कोसलवासिनस्सुकृतिनः कृतिनस्सुखमन्वहम् ॥

(इदानीं धार्मिकेन समर्थेन च भरतेन परिपाल्यमानानां कोसलवासिनां सुकृतं श्लाघते) कोसलवासिनः (जनाः)प्रकृतिपालनदक्षमतन्द्रितं सुधार्मिकं भरतं ईश्वरं (सन्तं) एत्य (अत एव) सुकृतिनः कृतिन (श्च) सुखमन्वहं अनुभवन्ति हि ॥

भरतमत्र विलोक्य तदाऽऽगतं षडृतवो गमिताः क्षणवन्मया ।
अहमिहास्मि गिरौ वनसम्पदा परवशोरवशोभिनि पक्षिणाम् ॥

(ततः भरतस्य चित्रकूटागमनं स्मरन् वदति) अत्र तदा आगतं भरतं विलोक्य षडृतवः क्षणवत् मया गमिताः अहं(तु) पक्षिणां रवशोभिनि इह गिरौ वनसम्पदा परवशः अस्मि । (अत्रत्य सौख्यातिशयेन संवत्सरकालः क्षणवत् गतः इत्यर्थः)

पितृस्मृतिप्रभवव्यथया मुहुः कलुषिते हृदये मम जानकि ! ।
त्वमिव मञ्जुलकाननराजयो विशुचमाशु च मामिह कुर्वते ॥

अथ मृतस्य स्वपितुः स्मरणपूर्वकं विपिनस्यास्य रामणीयकं प्रस्तौति—

जानकि ! मम हृदये पितृस्मृतिप्रभवव्यथया मुहुः कलुषिते (सति) मञ्जुलकाननराजयश्च त्वमिव मां आशु विशुचं (सन्तं) इह कुर्वते ॥

गिरिवरेऽत्र विलीनमिदं मनो मम न वाञ्छति गन्तुमितोऽन्यतः
श्रुतकथो भरतो यदि नागरैः पुनरसौ नरसौख्यकृदेष्यति ॥ ४६

(एतावत्स्मरणानन्तरं अत्रैव निवासे दोषोत्पत्तिशंकां सूचयति) अत्र गिरिवरे विलीनं ममेदं मनः इतः(अस्मात् प्रदेशात्) अन्यतः गन्तुं न वाञ्छति । भरतः श्रुतकथो यदि (अत्रैव सन्तीति विदितास्मद्वृत्तान्तश्चेत्) नरसौख्यकृत्

(प्रजानामिच्छापूरकः) असौ पुनः नागरै(स्सह) एष्यति (आगमिष्येत्येव) ॥

चिरतरं वयमिष्टतमे ततो ननु निवस्तुमिहैव न शक्नुमः ।
निवसतेरुचितं परिदृश्यते वनमितो नमितोग्रमृगं परम् ॥ ४७ ॥

(तर्हि इदानीं किं कर्तव्यमित्यत्राह)

हे इष्टतमे ! ततः (तस्मात् कारणात् ) वयं चिरतरं इहैव(इष्टतमे इत्येतत् इहेत्यस्य विशेषणं वा)निवस्तुं न शक्नुमो ननु (तस्मात् ) इतः (अस्मात् प्रदेशात् ) परं (अन्यत् ) नमितोग्रमृगं (अन्यस्मिन् वने घातुकमृगाणां पीडा-वर्तते इति शङ्काकुलायास्सीतायाः मनस्समाधानार्थं एतद्विशेषणम् ) वनं निवसतेः उचितं परिदृश्यते ॥

मधुरमेवमुदारमनाः प्रभुः प्रियतमामुपलाल्य चिरं वदन् ।
धृतमदातिशयां क्षितिनन्दिनीं समकरोन्मकरोन्मुखकेतुना ॥ ४८

उदारमनाः प्रभुः(श्रीरामः)प्रियतमां एवमुपलाल्य चिरं मधुरं वदन् क्षितिनन्दिनीं (सीतां) मकरोन्मुखकेतुना (मन्मथेन करणेन) धृतमदातिशयां समकरोत् ; (वनसौन्दर्यवर्णनेन तथैव प्राणिनां दाम्पत्यप्रेमवर्णनेन च कामविकारपूर्णहृदयामकरोदिति भावः) ॥

मृदुलशाद्वलमञ्जुलभूतले समुपविश्य शनैरथ दम्पती ।
श्रमजवारि विमृज्य सुखं स्थितौ सुरहितौ रहितौ भ्रमणेच्छया ॥

(एतावद्वनविहरणेन परिश्रान्तौ इदानीं विश्रान्तिसुखमनुबभूवतुरिति अत्रोच्यते) अथ सुरहितौ (देवानां हितकरौ एतद्विशेषणं तुउत्तरत्र शीघ्रमेव वनमिदं विमुच्य राक्षसवधाय प्रवर्तेते इति भावद्योतनार्थं) दम्पती (सीतारामौ) मृदुलशाद्वलमञ्जुलभूतले शनैस्समुपविश्य श्रमजवारि विमृज्य भ्रमणेच्छया रहितौ (सन्तौ)सुखं (यथातथा) स्थितौ ॥

मनुकुलेन्दुरथ प्रियचाटुवाक् निजकरार्पितगैरिकचित्रकम् ।
जनकजामुखपद्ममधीरधीः चिरमयं रमयंश्च चुचुम्ब तत् ॥ ५०

अथ प्रियचाटुवाक् अयं मनुकुलेन्दुः चिरं (प्रियां) रमयन् निजकरार्पित-गैरिकचित्रकं तत् (तादृक्सुन्दरमिति भावः) जनकजामुखपद्मं अधीरधी(स्सन्) चुचुम्बच ॥

भुजलतां रमणांसतले निजां स्रजमिवाथ निधाय महीसुता ।
पतिमतोषयदाप्तवचोमृतैः शुचिरदाऽचिरदारितहृद्व्यथैः ॥ ५१

अथ शुचिरदा महीसुता निजां भुजलतां रमणांसतले स्रजमिव निधाय अचिरदारितहृद्व्यथैः आप्तवचोमृतैः (तत्तत्कालानुगुणैर्मनश्शान्तिकैरानन्दजनकैः अमृतसमानैर्वचोभिः) पतिमतोषयत् ॥

वनविहारपरिश्रमतस्ततो भुजलतामपनीय धवांसतः ।
अभवदर्धनिमीलितलोचना विमलकोमलकोकनदेक्षणा ॥ ५२ ॥

ततः (अनन्तरं) विमलकोमलकोकनदेक्षणा (विमले च ते कोमले च कोकनदे इव ईक्षणे यस्यास्सा अत्र ईक्षणयोः कोकनदौपम्यं अटवीपर्यटनात् निद्रागमनाच्च रक्तवर्णत्वात् रक्तोत्पलौपम्यम् ) (सीता) वनविहारपरिश्रमतः भुजलतां धवांसतः अपनीय अर्धनिमीलितलोचना अभवत् ॥

अथ निधाय शिरस्सुमशेखरं प्रियतमाङ्कतले कुटिलालका ।
जनकजा निभृता सुखनिद्रया श्वसितवासितवासमही बभौ ॥ ५३

अथ कुटिलालका जनकजा सुमशेखरं शिरः प्रियतमाङ्कतले निधाय सुखनिद्रया निभृता (अस्पन्दमाना( श्वसितवासितवासमही (श्वसितेन वासिता वासनही यया सा) (सती) बभौ ॥

असकृदुच्छ्वसितेन समुन्नमत्कुचयुगा दयितं स्वपनेऽपि सा ।
प्रणयिनी परिरब्धुमिवोद्यता क्षितिगतातिगतार्तिभरा बभौ ॥ ५४

क्षितिगता (भूतले शयाना) प्रणयिनी (भर्तरि अत्यन्तप्रेमवती) सा स्वपनेऽपि दयितं परिरब्धुं उद्यतेव । असकृत् उच्छ्वसितेन समुन्नमत्कुचयुगा अतिगतार्तिभरा बभौ (निद्रानुभवात् निर्गतपरिश्रमा बभौ) ॥

अथ शनैः प्रविबुध्य विदेहजा विरचिताङ्कभङ्गमनोहरा ।
चिकुरमाकुलमारचयत्समं भ्रमरचामरचारुतरालका ॥ ५५ ॥

अथ भ्रमरचामरचारुतरालका (भ्रमरवत् चामरवच्च चारुतरालका) विदेहजा शनैः प्रविबुध्य विरचिताङ्कभङ्गमनोहरा (सती) आकुलं चिकुरं सममारचयत् ॥

परिहृता मृदुगात्रि तवाधुना श्रमभवाऽलसता किमु निद्रया ।
इति वदन् प्रियया गदितस्ततो नरमणीरमणीयदृशा पुनः ॥ ५६

हे मृदुगात्रि ! श्रमभवा (अरण्यसञ्चारश्रमादुत्पन्ना) अलसता तव अधुना निद्रया परिहृता किमु ? इति वदन् नरमणिः ततः रमणीयदृशा (तदानीमेव निद्रावशादुत्थितायाः तस्याः दृशि द्विगुणितसौन्दर्यद्योतनार्थं विशेषणमिदं) प्रियया पुनः गदितः (इतः पूर्वमपि आप्तवचोऽमृतैः पतिमतोषयत् किल) ॥

दयित ! दासजने मयि कीदृशी वद तवादरवृत्तिरियं बत ।
अनलसामपि वीक्ष्य विशङ्कसे श्रमसहामसहायकृशां च माम् ॥

हे दयित ! तव इयमादरवृत्तिः दासजने मयि कीदृशी (मनसापि निश्चेतुमशक्येति भावः) वद (त्वमेव वक्तव्यं) बत (हर्षे) (अत्याश्चर्ये च) अनलसामपि मां वीक्ष्य श्रमसहामसहायकृशां च विशङ्कसे । (अरण्यवासश्रमपीडि-

ता प्रागन्तःपुरे दासीजनसहस्रसेव्यमाना इदानीं स्त्रीजनसाह्यरहिता च ततः कृशा इति विशङ्का तवास्ति अत्र तव प्रेमातिशय एव हेतुरिति भावः)

**मनसि भावनया सुखदुःखयोः परिणतिर्भवतीह न संशयः ।**
**यदि भवन्निकटेऽस्मि मम श्रमस्तनुगतोऽनुगतोऽपि सुखायते ॥**

(ननु वनवासक्लेशानुभवे प्रत्यक्षसिद्धे सति कथं श्रमरहितेति वदसीत्यत्राह) सुखदुःखयोः परिणतिः मनसि भावनया भवति इह (अस्मिन् विषये) न संशयः भवन्निकटे अस्मि यदि मम तनुगतः श्रमः (शारीरकं कष्टं) अनुगतोऽपि सुखायते (भवतः सान्निध्यात् प्रेमातिशयाच्च देहश्रमः मम नैवज्ञायते किन्तु सुखरूपेणैव परिणमतीति भावः) ॥

**शुभनिदान ! कृपार्णव ! नाथ ! ते स्मरणमात्रमलं सुखसम्पदे ।**
**त्वदविनास्थितिभाग्यबलादहं भवनगेव नगेऽत्र सुनिर्वृता ॥ ५९**

शुभनिदान ! कृपार्णव ! नाथ ! ते स्मरणमात्रं सुखसम्पदे अलम् । (एवं स्थिते) त्वदविनास्थितिभाग्यबलात् (त्वया सह अविनाभावेन वर्तमानायाः यो भाग्यातिशयः तस्य बलात् ) अहं अत्र नगे भवनगेव सुनिर्वृता (अस्मि) ॥

**सुखमयं सकलं तव सन्निधावपि च ते प्रणयो मयि पुष्कलः ।**
**भवति विक्लबता मम तत्कथं प्रियतमायतमान्यभुज प्रभो ॥ ६०**

हे आयतमान्यभुज (आयतौ मान्यौ च भुजौ यस्य सः तस्य सम्बुद्धिः) प्रियतम प्रभो ! तव सन्निधौ सकलं सुखमयं (अनेन महत्कष्टमपि सुखप्रचुरं भवतीति भावः) अपि च ते प्रणयः मयि पुष्कलः तत् (तस्मात् कारणात् ) मम विक्लबता कथं भवति ? (क्लेशमेव न जानामीति सिद्धः) ॥

**बहुविधोक्तिभिरत्र फलं किमु प्रिय ! वचः परमार्थमिदं शृणु ।**
**परमधाम्नि सुखं यदिहास्ति मे विभवतो भवतो ननु सन्निधौ ॥**

हे प्रिय ! बहुविधोक्तिभिरत्र किमु फलं ? परमार्थमिदं वचः श्रुणु । परमधाम्नि (वैकुण्ठे) यत् सुखमस्ति (तत् सुखं) इह भवतः सन्निधौ विभवतः (अत्यन्तवैभवातिशयेन) मे अस्ति ननु ?

**तदलमात्मकृते सुखचिन्तया त्वमपि तावदिह स्वपिहि क्षणम् ।**
**इति जगाद पतिं क्षितिनन्दिनी पतिपराऽतिपराक्रमशालिनम् ॥**

तत् (तस्मात् कारणात् ) आत्मकृते (मदर्थं) सुखचिन्तया अलं त्वमपि इह क्षणं तावत् स्वपिहि (तावत् वाक्यालङ्कारो वा क्षणं तावत् क्षणकालं साकल्येनेति वा) स्वपिहि इति पतिपरा क्षितिनन्दिनी अतिपराक्रमशालिनं पतिं जगाद ॥

**सुसदृशी फणितिः पतिदेवते विमलमैथिलवंशभुवस्तव ।**
**इति सतीमभिनन्द्य रघूद्वहश्चिरमुदारमुदा परिषस्वजे ॥ ६३ ॥**

भोः पतिदेवते ! विमलमैथिलवंशभुवस्तव (इयं) सुसदृशी फणितिः इति रघूद्वहः सतीमभिनन्द्य उदारमुदा चिरं परिषस्वजे ॥

**मृदुलमङ्कमसावुपधानितं क्षितिभुवा प्रतिपद्य महीतले ।**
**सुखमशेत फणीन्द्र इवादरादधिपयोधि पयोनिभवर्ष्मणि ॥ ६४**

असौ (श्रीरामः) क्षितिभुवा (सीतया) उपधानितं मृदुलं अङ्कं प्रतिपद्य महीतले अधिपयोधि (क्षीरसमुद्रे) पयोनिभवर्ष्मणि (अनेन आदिशेषस्य वपुषि शैत्यश्वेतिमादयः प्रकटिताः) फणीन्द्र इव (आदिशेषे यथा) आदरात् सुखमशेत (बालतृणावृतस्य महीतलस्य आदिशेषदेहौपम्यं च शैत्यसौरस्यमार्दवादिगुणैः) (अत्र क्षीराब्धौ शेषशायी नारायण एवायं राम इति उपमावाक्येन व्यज्यते) ॥

जटिलमस्तकमस्तविभूषणं मुकुलिताक्षमियं धृतवल्कलम् ।
अनुसरन्तमिवात्मरतान्मुनीनमनुतामनु तापसभृत्कुलम् ॥ ६५ ॥

इयमू (सीता) आमनु (मन्वारभ्य) तापसभृत्कुलं (तपोधनपोषकवंशपरंपरं) जटिलमस्तकं अस्तविभूषणं मुकुलिताक्षं धृतवल्कलं (श्रीरामं) आत्मरतान् मुनीननुसरन्तमिव अमनुत ॥

दिविचरन्नथ वासविरासुरप्रकृतिराश्रितकाककलेबरः ।
गिरिममुं प्रविवेश यदृच्छया रटितपाटितपार्श्वचरश्रवाः ॥६६ ॥

अथ आसुरप्रकृतिः वासविः (वासवापत्यं जयन्तः) अश्रितकाककलेबरः रटितपाटितपार्श्वचरश्रवाः (रटितेन पाटितानि पार्श्वचराणां श्रवांसि येन सः) दिवि चरन् अमुं गिरिं यदृच्छया प्रविवेश ॥

डयनभेदगरुध्वनिकृत् क्वचित् क्वचिदुदग्रनगाग्रतलेस्थितः ।
क्वचिदपासितपत्रिशिशुः क्वचित् स्वकुलसङ्कुलसञ्चरणोऽभवत् ॥

(अयं काकः) क्वचित् (प्रदेशे) डयनभेदगरुध्वनिकृत् क्वचित् उदग्रनगाग्रतले (उन्नतवृक्षाग्रे) स्थितः क्वचित् अपासितपत्रिशिशुः (व्यापादितपक्षिशावकः) क्वचित् स्वकुलसंकुलसञ्चरणः अभवत् ॥

करटराड्विचरन्नथ मेदिनीदुहितृरामविलासपुरस्कृतम् ।
वनपदं प्रययौ शमयन् पितुश्शुभयशो भयशोककरश्शनैः ॥ ६८

अथ भयशोककरः करटराट् विचरन् पितुः शुभयशः शमयन् मेदिनी दुहितृरामविलासपुरस्कृतं वनपदम् शनैः प्रययौ ॥

तदनु राममवेक्ष्य सुनिद्रया निभृतमस्य सतीमपि तां स्थिताम् ।
पललोलुप एष तदन्तिके व्यचलदाचलदात्मगरुत्तदा ॥ ६९ ॥

तदनु एषः (काकः) सुनिद्रयानिभृतं रामं स्थितां(निषण्णां)अस्य(रामस्य) सतीं तामपि (सीतामपि) अवेक्ष्य पललोलुप(स्सन्) तदन्तिके आचलदात्मगरुत् (ईषच्चलितनिजपक्षः (सन्) तदा व्यचलत् ॥

क्षितिसुताकुचकुम्भतटामिषे कृतरुचिर्नमुचिद्विषदात्मजः ।
तदुपरि न्यपतत्स पुनः पुनः दुरितवारितवासवियोग्यधीः ॥ ७०

दुरितवारितवासवियोग्यधीः नमुचिद्विषदात्मजः सः (काकः) क्षितिसुताकुचकुम्भतटामिषे कृतरुचिः (सन्) तदुपरि पुनःपुनः न्यपतत् ॥

स्ववपुषीव मनस्यपि मेचकः स्तनपिधानदुकूलमिलाभुवः ।
अपचकर्ष तया स निवारितोऽप्यविरतो विरतोऽप्यधिकोद्यमः ॥

स्ववपुषीव मनस्यपि मेचकः सः विः (पक्षी) तया निवारितोपि अविरतः अतोऽपि (पूर्वापेक्षया) अधिकोद्यमः (सन्) इलाभुवः स्तनपिधानदुकूलं अपचकर्ष ॥

सवचनं प्रतिरोधकृतेव तद्रणितकङ्कणचञ्चलपाणिना ।
अपि निवारित एष तुतोद तत्स्तनतटं नतटङ्कसदङ्कुरवः ॥ ७२

सवचनं (वचनपूर्वकं)प्रतिरोधकृता इव तद्रणितकङ्कणचञ्चलपाणिना(तस्याः) रणितानि कङ्कणानि यस्मिन् सः स चासौ चञ्चलश्चासौ पाणिश्च तेन) निवारितोऽपि नतटङ्कसदङ्कुरवः एषः तत्स्तनतटम् (तस्याः स्तनप्रदेशं) तुतोद ॥

अथ शरारुमवार्यदुरुद्यमं बलिभुजं तमवेक्ष्य भयङ्करम् ।
रमणसौख्यविघातरुषाऽज्वलत् धरणिजाऽरणिजाग्निशिखोपमा ॥

अथ धरणिजा शरारुं अवार्यदुरुद्यमं भयङ्करं तं बलिभुजं अवेक्ष्य रमणसौख्यविघातरुषा अरणिजाग्निशिखोपमा अज्वलत् ॥

**निजपयोधरकृन्तनतस्तथाऽप्यविरमत्यतिदारुणवायसे ।**
**सुखविनिद्रितभर्तृहितेच्छया कुपितयाऽपि तया नविचेष्टितम् ॥**

अतिदारुणवायसे तथापि निजपयोधरकृन्तनतः अविरमति (सति) सुखविनिद्रितभर्तृहितेच्छया तया कुपितयपि नविचेष्टितम् ॥

**अथ महेन्द्रभवातिविजृम्भणात् स्तनगिरेर्गलिताभिनवाविला ।**
**झटिति रक्तझरी न्यपतत् भृशं भुवि वरं विवरं च यथा भवेत् ॥**

अथ महेन्द्रभवातिविजृम्भणात् स्तनगिरेः गलिता अभिनवा आविला रक्तझरी च भुवि वरं विवरं यथा भवेत्(तथा) झटिति भृशं न्यपतत् (अत्र वृष्टिपरोऽप्यर्थविशेषः अवगम्यते)

**स तु कदुष्णतदस्रझराप्लवात्तिमितसंहननो रघुनायकः ।**
**प्रबुबुधे विबुधेडितसद्गुणःत्वरितचारितचारुदृगञ्जसा ॥ ७६ ॥**

विबुधेडितसद्गुणः सः रघुनायकस्तु कदुष्णतदस्रझराप्लवात् (कवोष्णं तस्याः अस्रं रक्तं तस्य झराप्लवात् **लोहितास्ररक्तक्षतजशोणितम्** इत्यमरः) तिमितसंहननः (आर्द्रीकृतगात्रः) त्वरितचारितचारुदृक् (सन्) अञ्जसा प्रबुबुधे ॥

**सपदि तत्र कलत्रमपत्रपाकरुणकोपभयाकुलमानसम् ।**
**क्षतजवर्षिकुचं प्रसमीक्ष्य तत् भृशमसौ शमसौख्यमथात्यजत् ॥**

असौ (श्रीरामः) सपदि तत्र अदत्रपाकरुणकोपभयाकुसमानसं क्षतजवर्षिकुचं तत् कलत्रं प्रसमीक्ष्य अथ भृशं शमसौख्यं अत्यजत् (प्रशान्तात्मापि अत्यन्तकोपाविष्टोऽभवत् ॥

**किमिदमीदृगसह्यमहागसां रचयिता बत मानिनि कः खलः ।**
**कुपितसिंहसटालवनेन कः स्वयमपायमपास्य जिजीविषेत् ॥ ७८**

हे मानिनि ! किमिदं ? ईदृगसह्यमहागसां रचयिता खलः कः बत । कुपितसिंहसटालवनेन स्वयं अपायं अपास्य कः जिजीविषेत् ॥

भुजगराजमपेतमतिर्बलात् करतलेन विमर्द्य रुषोज्ज्वलम् ।
जगति जीवितुमिच्छति कः पुनः सुनयनेऽनयनेतुरुपाश्रयात् ॥

हे सुनयने ! अपेतमतिः कः पुनः अनयनेतुरुपाश्रयात् (अविवेकिनः प्रभोराश्रयबलात् ) रुषोज्ज्वलं भुजगराजं करतलेन बलात् विमर्द्य जगति जीवितुमिच्छति । (मरणोन्मुखस्यैव एतादृशदुर्बुद्धिः भवतीति भावः)

इति वदन् स्फुरिताधरभीषणः परुषरोषकषायितलोचनः ।
धुरि सलोहितचञ्चुमवेक्ष्य तं बत कृतान्तकृतान्तरुषं दधौ ॥ ८०

इति वदन् स्फुरिताधरभीषणः परुषरोषकषायितलोचनः (श्रीरामः) धुरि सलोहितचञ्चुं तं (काकं) अवेक्ष्य कृतान्तकृतान्तरुषं(कृतान्तेन कृता या अन्तकालिकरुट् तां) दधौ बत (आश्चर्यं तादृशप्रशान्तस्वभावस्यापि एतादृशकोपातिशयः आश्चर्यकरः इति भावः) ॥

इति महोल्बणरोषवशादसावपि खगे द्रुहिणास्त्रसुयोजितम् ।
सपदि विष्टरदर्भदलं जहौ रविमहो विमहोभरमादधत् ॥

इति असौ (श्रीरामः) महोल्बणरोषवशात् खगेऽपि द्रुहिणास्त्रसुयोजितं रविं विमहोभरं (निस्तेजस्कं) आदधत् विष्टरदर्भदलं सपदि जहौ अहो (पतगेऽपि ब्रह्मास्त्रप्रयोगस्य कारणं तु पत्न्यां प्रेमगौरवातिशयः काकस्य महाऽपराधश्च) (अत एव अहो इत्याश्चर्यम् ) ॥

द्रुततरं सरुतं परिधावतः प्रचुरजीवभियोऽस्य तु मौकलेः ।
सपदि पृष्ठत एव तृणं ययौ नभसि तं भसितं प्रविधित्सु तत् ॥

सत्वं (यथातथा) द्रुततरं परिधावतः प्रचुरजीवभियः अस्य मौकलेः पृष्ठत एव तत् तृणं तु नभसि तं (काकं) भसितं प्रविधित्सु (भस्मप्रविधातुमिच्छु सत्) सपदि ययौ ॥

वियति नीलतमे द्रुतगामिनं बलिभुजं तु तदस्त्रमनुद्रवत् ।
विरुरुचे निकषाश्मसुवर्णवत् प्रतपदातपदाहकरं तदा ॥ ८३ ॥

तदा आतपदाहकरं तदस्त्रं तु नीलतमे वियति द्रुतगामिनं बलिभुजं अनु द्रवत् प्रतपत् (सत्) निकषाश्मसुवर्णवत् विरुरुचे ॥

रघुवरेण विमुक्तमपि द्रुतं नहि जघान महास्त्रममुं खगम् ।
भुवनमातुरसौ दुहितुर्भुवस्त्वसदृशा स दृशाद्य यदीक्षितः ॥ ८४

सः असौ (श्रीराममुक्तब्रह्मास्त्रस्य शरव्यभूतोऽयं काकः) तु भुवः दुहितुः-भुवनमातुः (सीतायाः) असदृशा दृशा अद्य यत् (यस्मात् कारणात्) ईक्षितः (तस्मादेव)रघुवरेण विमुक्तमपि महास्त्रमपि अमुं खगं द्रुतं नहि जघान (यया कयापि प्रसक्त्या लक्ष्मीकटाक्षपात्रीभूतः अयं काकः श्रीराममुक्तब्रह्मास्त्रतोपि तत्क्षणमेव नाहन्यतेति भावः) ॥

पितरि मे सुरनेतरि भीः कुतस्त्विति मदेन महेन्द्रसभां गतः ।
पितृपदोर्न्यपतत् श्रयतां प्रभो शरणदो रणदोऽसि रिपोरिति ॥

सुरनेतरि मे पितरि(सति)भीस्तु कुतः इति मदेन महेन्द्रसभांगतः(सकाकः) हे प्रभो ! श्रयतां शरणदः रिपोः रणदश्च असि इति पितृपदोः न्यपतत् ॥

स मघवातु विपन्नमवेक्ष्य तं धुरि महास्त्रमपि श्रुततत्कथः ।
परिजहौ बत रामविरोधिनां जगति रे गतिरेव नहीति तम् ॥

सः मघवातु विपन्नं तमवेक्ष्य धुरि महास्त्रमपि अवेक्ष्य श्रुततत्कथः(विदितसकलवृत्तान्तस्सन्) रे (नीचसंबोधनं) रामविरोधिनां जगति गतिरेव नहि

बत इति तं परिजहौ । (रामं विरुध्य अस्मत्सकाशागमनमपि अनुचितमिति बत इत्यनेन व्यज्यते)

**अशनिपातनिवारणमात्मनो वसनतः कलयन्निव मूढधीः ।**
**हरविरिञ्चिमुखानपि संश्रितो नहि तदा हितदानभजत्खगः ॥**

अशनिपातनिवारणं आत्मनः वसनतः कलयन् मूढधीरिव खगः हरविरिञ्चिमुखानपि संश्रितः तदा हितदान् नहि अभजत् ॥

**इति जगत्रयमप्यटता मुहुः स्वशरणं त्वनवाप्य विषीदता ।**
**किमपि हन्त विचिन्तितमात्मनो मनसि तेन सितेतरपक्षिणा ॥**

इति जगत्रयमपि मुहुः अटता स्वशरणं तु अनवाप्य विषीदता तेन सितेतरपक्षिणा आत्मनः मनसि किमपि विचिन्तितं हन्त(रामाश्रयणे मतिं करिष्यतीति हर्षे) ॥

**परमकारुणिको रघुनायको दयितया च दयात्मिकया युतः ।**
**प्रयतते श्रयतामपराधिनामपि हिते पिहितेतरदुर्गुणः ॥ ८९ ॥**

रघुनायकः परमकारुणिकः दयात्मिकया दयितया च युतः (वर्तते) (अत एव) विहितेतरदुर्गुणः (असौ) श्रयतामपराधिनामपि हिते प्रयतते ॥

**तदमुमेव विभुं शरणं व्रजाम्यशरणश्शरणागतरक्षकम् ।**
**श्रितजनेष्वनुकम्पिनमद्य तं परिभवोऽरिभवोऽपि न लिम्पति ॥**

तत् (तस्मात् कारणात्) अशरणः (अहं) शरणागतरक्षकं अमुमेव विभुं अद्य शरणं व्रजामि । (असह्यापराधं कृत्वा कथं तमेवाश्रयसी इत्यत्राह) श्रितजनेषु अनुकम्पिनं तं अरिभवः परिभवोऽपि न लिम्पति ॥

इति विनिश्चितधीः पुनरायययौ बलिचरस्सतदेव महावनम् ।
जनकजाञ्चितरामनिषेवितं सुमधुरं मधुरञ्जितपादपम् ॥ ९१ ॥

इति विनिश्चितधीः सः बलिचरः जनकजाञ्चितरामनिषेवितं सुमधुरं मधुरञ्जितपादपं तदेव महावनं पुनराययौ ॥

दशरथस्य सुतः प्रथमोऽप्यथो विरचितस्नपनो ह्रदवारिणि ।
व्रणविरोपणमूलिकया कुचं वरतनोरतनोदरुजं क्षणात् ॥ ९२

अथो (वायसंप्रतिब्रह्मास्त्रप्रयोगानन्तरं) दशरथस्य प्रथमः सुतोपि ह्रदवारिणि विरचितस्नपनः (पत्नीकुचक्षतरक्तसिक्तात्मवपुश्शुध्यर्थं तत्रत्य कस्मिंश्चित् ह्रदे कृतावगाहनः सन् ) वरतनोः (अत्यन्तमनोहराङ्गयाः पत्न्याः) कुचं व्रणविरोपणमूलिकया क्षणात् अरुजं (सन्तं) अतनोत् ॥

कृतशुभस्नपनां जनकात्मजां मृदुगिरा परिसान्त्वयतः प्रभोः ।
रघुपतेरपतत्पदपद्मयोः कृपणतापणतामभिदर्शयन् ॥ ९३ ॥

(स काकः) कृतशुभस्नपनां (काकस्पर्शनात् रुधिराक्तत्वाच्च मङ्गलस्नातां) जनकात्मजां मृदुगिरा परिसान्त्वयतः(स्वसान्निध्येऽपि केनचित्काकेन एवं परिभूतायाः पत्न्याः दुःखमपनेतुं मृदुगिरा परिसान्त्वयतः) प्रभोः रघुपतेः पदपद्मयोः कृपणतापणतां (कार्पण्यस्य आपणत्वं) अभिदर्शयन् अपतत् ॥

श्वसितकम्पिहृदं श्लथपक्षतिं विवृतचञ्चुमुदस्रविलोचनम् ।
पतिपुरः पतितं तु ददर्श सा कृशतमं शतमन्युसुतं खगम् ॥ ९४

सा तु (सीता तु श्वसितकम्पितहृदं श्लथपक्षतिं विवृतचञ्चुमुदस्रविलोचनं कृशतमं पतिपुरःपतितं शतमन्युसुतं खगं ददर्श ॥

नहि शशाक कृपालुरुपेक्षितुं जनकजा कृपणं रिपुमप्यमुम् ।
तदिदमाह पतिं भगवन् श्रिते वितर कातरकाकवरे कृपाम् ॥ ९५

कृपालुः जनकजा कृपणं रिपुमपि अमुं उपेक्षितुं नहि शशाक । तत् (तस्मात्) पतिं इदमाह । भगवन् श्रिते कातरकाकवरे कृपां वितर ॥

क्व चतुरास्यमहास्त्रमहो क्व वा लघुतरः करटः करुणानिधे ।
मदनुरागबलादिदमाचरो वितर कातरकाकवरे कृपाम् ॥ ९६

करुणानिधे चतुरास्यमहास्त्रं क ? लघुतरः करटो वा क ? मदनुरागबलादिदमाचरः अहो ! कातरकाकवरे कृपां वितर ॥

अथ सतीमवदत्स दयानिधिः सखि ! विपन्नममुं शरणागतम् ।
पिशुनमप्ययि हन्तुमहं कथं वद यते दयतेऽत्र मनोऽपि मे ॥

अथ दयानिधिः सः सतीमवदत् अयि सखि ! विपन्नं शरणागतं पिशुनमपि अमुं हन्तुं अहं कथं यते वद । अत्र (अस्मिन् काके)मे मनोऽपि दयते

कृतमहागसि साध्वि ! वधोचितेऽप्यनुचितश्शरणार्थिनि निग्रहः ।
अनाभिरक्ष्य खगं तदिहोज्झितुं कथमनाथमनादरतस्सहे ॥ ९८

हे साध्वि ! कृतमहागसि वधोचितेऽपि शरणार्थिनि निग्रहः अनुचितः तत् (तस्मात् ) इह (इदानीं) अनाथं खगं अनभिरक्ष्य अनादरतः उज्झितुं कथं सहे ॥

अधिगतेद्दशवागमृताप्लवव्यपगतार्तिरसौ बलिभोजनः ।
रघुकुलांबुधिचन्द्रमसाऽमुना निजगदे जगदेकदयालुना ॥ ९९ ॥

अधिगतेद्दशवागमृताप्लवव्यपगतार्तिः असौ बलिभोजनः जगदेकदयालुना अमुना रघुकुलांबुधिचन्द्रमसा निजगदे ॥

बलिचरासि वधोचितचेष्टितः तदपि सोढमिदं दुरितं मया ।
असुविनाशभयं द्रुहिणास्त्रजं त्यज नता जनता हि ममेप्सिता ॥

हे बलिचर वयोचितचेष्टितोसि ! तदपि (तथाऽपि) इदं दुरितं मया सोढम् । (तस्मात्) द्रुहिणास्त्रजमसुविनाशभयं त्यज । (कुत इतिचेत्) नता जनता मम ईप्सिता हि ॥

**परभृदुत्तम किन्त्वभिमन्त्रितं नहि वृथाऽस्त्रममोघमिदं भवेत् ।**
**इति वदन् करटानुमतेन तद्दृशमनाशमनाशयदस्रतः ॥ १०१**

हे परभृदुत्तम ! (इतरान् रक्षितुं प्रवृत्तेषु श्रेष्ठतम ! शरणागतरक्षणव्रतनिरतस्य मम व्रतं साधयितुं त्वं त्वदीयं किमप्यङ्गं मन्मुक्तब्रह्मास्त्रस्य कृपया इदानीं दत्वा मामपि भर इति भावबोधनार्थमिदं संबोधनपदं)किंतु अभिमन्त्रितं अमोघं इदं अस्त्रं वृथा नहि भवेत् इति वदन् करटानुमतेन (तत्काकस्यानुमतिं प्राप्य) तद्दृशं (तस्याक्षि) अनाशं (यथातथा)अस्रतः अनाशयत् (काकानां तिर्यग्वीक्षणेन द्वयोरपि दृशोः वस्तुदर्शनसामर्थ्यवत्वात् नाशितापि दृक् अनाशितैवेति भावः)

**स चिरजीव्यथ रामपदाब्जयोः जनकजांघ्रिसरोरुहयोरपि ।**
**सविनयं प्रणिपत्य तदाज्ञया दिविरतो विरतो दुरिताद्ययौ ॥**

अथ स चिरजीवी (रामानुग्रहादिदानीं सः चिरजीव्यभूदिति भावः) रामपदाब्जयोः जनकजांघ्रिसरोरुहयोरपि सविनयं प्रणिपत्य तदाज्ञया दुरितात् विरतः दिविरतः ययौ ॥

**अथ गते निजवासभुवं खगे स भगवान् नररूपधरो हरिः ।**
**जगदमङ्गलहार्यपि कार्यवित् महितया हितयाऽऽह गिरा प्रियाम् ॥**

अथ खगे निजवासभुवं गते(सति) नररूपधरः भगवान् सः हरिः जगदमङ्गलहारी अपि कार्यवित् महितया हितया गिरा प्रियां आह

भजति यन्निजकर्मफलं जनस्सदसदप्यपरोऽत्र न कारणम् ।
उपनतां विपदं त्वपरैःकृतां विदुरितो दुरितोल्बणताऽस्ति किम् ॥

जनः सत् असत् अपि यत् निजकर्मफलं भजति अत्र (तत्तत्कर्मफलानुभवे) अपरः नकारणं (भवति) (एवं स्थिते) उपनतां विपदं तु (तुशब्देन संपदं व्यवच्छिनत्ति) अपरैः) कृतां विदुः इतोऽपि दुरितोल्बणता अस्ति किम् ?

व्यसनमात्मपुराकृतपापजं गतमशोच्यमिदं विदुषां मतम् ।
भवति साधुजनस्य विपन्मुहुः न महतो महतो विपदो भिदा ॥

व्यसनं (विपत्) आत्मपुराकृतपापजं गतं अशोच्यम् । इदं विदुषां मतं साधुजनस्य विपत् मुहुः भवति । महतः (सत्पुरुषस्य) महतः उत्सवस्य (महशब्दस्योपरि सार्वविभक्तिकस्तसिप्रत्ययः) । विपदः (विपत्तेश्च) भिदा (भेदः)न अस्ति । (सत्पुरुषाणां सन्तोषव्यापारस्य दुःखस्य च भेदो नास्ति । (सम्पत्तौ च विपत्तौ च महतामेकरूपता हि)

मतिमताऽऽपदि धैर्यमवाप्यते स्वकरणीयमथात्मनि चिन्त्यते ।
तदिह वच्मि शुभोदयसाधकं गतमतीतमतीव नमेऽत्र शुक् ॥

मतिमता अपदि धैर्यमवाप्यते । अथ स्वकरणीयं आत्मनि चिन्त्यते तत् (तस्मात् ) इह (अस्मिन् सन्दर्भे) शुभोदयसाधकं वच्मि गतं अतीत (मेव) अत्र मे अतीव शुक् न (अस्ति)

उपरि काकनिपातममङ्गलं किल वदन्ति फलं किमिहास्य वा ।
न विरतस्त्वधुनाऽप्यनृजुर्दृशोरविषयो विषयोगसमो विधिः ॥

उपरि काकनिपातं अमङ्गलं वदन्ति किल (प्रसिद्धिः) । इह अस्य फलं किं वा (भविष्यति न जाने) दृशोरविषयः विषयोगसमः अनृजुः विधिस्तु अधुनापि न विरतः (कुटिलः विधिः बन्धुजनवियोगं अरण्यवासं पितृमरण।-

दिकं क्लेशं दत्वाऽपि इदानीमपि अस्माकं विपत्युत्पादने न विश्रान्तः ऽपरिकाकनिपतनात् किमप्यश्रेयः सिद्धमेवेति भावः) एतेन अचिरादेव एतादृशपरममोग्यस्थानात् निर्गमनं कतिपयकालानन्तरं सीतायाः महत् दुःखं च भविष्यतीति सूचितम् )

तदिह पूतवनानि तपोधनैः शमरतैः कलितानि वयं श्रिताः ।
ननु भजाम शुभं मुनिदर्शनात् निहतमोहतमोभरमानसाः ॥

तत् (तस्मात् कारणात्) इह (इदानीं शमरतैः तपोधनैः कलितानि पूतवनानि वयं श्रिताः मुनिदर्शनात् निहतमोहतमोभरमानसाः (सन्तः) शुभं भजाम ननु

विमलपुण्यसरित्सु तपोवनेष्वपि महर्षिजनाश्रमभूमिषु ।
प्रशमिताधिरुजाश्शुभमाप्नुमो निहतमोहतमोभरमानसाः ॥

विमलपुण्यसरित्सु तपोवनेषु (पूर्वं प्रसिद्धाः महात्मानः महर्षयः अत्र आसन् इदानीं विविक्तमस्ति तादृशवनेषु इत्यर्थः) महर्षिजनाश्रमभूमिषु (इदानीमपि तपस्विभिरुषितेषु स्थलेषु) अपि प्रशमिताधिरुजाः निहतमोहतमोभरमानसाः (सन्तः) शुभं आप्नुमः ॥

कुलगुरुं जगदेकविलोचनं श्रुतितनुं तपनं त्रिगुणात्मकम् ।
अजहरीश्वररूपमहर्मुखे वयमिनं यमिनं प्रणमाम च ॥ ११० ॥

कुलगुरुं जगदेकविलोचनं श्रुतितनुं त्रिगुणात्मकं अजहरीश्वररूपं यमिनं (नियमयुक्तं अथ वा यमः अस्यास्तीति यमी यमस्य पितरमिति वा) तपनं इनं अहर्मुखे वयं प्रणमाम च (अत्र "**नमस्सवित्रे जगदेकचक्षुषे....त्रयीमयायत्रिगुणात्मधारिणे विरिञ्चिनारायणशंकरात्मने**,, इति सूर्यस्तुतिमन्त्रस्मारकपदानि प्रयुक्तानि)

इति सतीं कथयन् स्वसभाजनक्षणनिरीक्षकलक्ष्मणरक्षितम् ।
उटजमाप निजं दयितासखः श्रमहरं महरङ्गतलं हृदः ॥ १११ ॥

इति सतीं कथयन् दयितासखः (श्रीरामः) स्वसभाजनक्षणनिरीक्षकलक्ष्मणरक्षितं श्रमहरं हृदः महरङ्गतलं (हृदयस्य महोत्सवरङ्गस्थानं) निजं उटजमाप

अकथितैकदृगुद्धतचेष्टितस्सहजभक्तिमसौ सहजं प्रभुः ।
मृदुगिरा परिपृच्छ्य मृदुस्मितो निजगृहे जगृहेऽपचितिं ततः ॥

मृदुस्मितः असौ प्रभुः अकथितैकदृगुद्धतचेष्टितः (सन्) सहजभक्ति सहजं मृदुगिरा परिपृच्छ्य निजगृहे ततः (लक्ष्मणात्) अपचितिं(सत्कारं)जगृहे ॥

अथ परेद्यवि लक्ष्मणमग्रजः सुनिपुणैर्वचनैर्वदतां वरः ।
समकरोद्विपिनान्तरसंश्रये धृतमतं तमतन्द्रसमुद्यमम् । ॥ ११३

अथ वदतांवरः अग्रजः (श्रीरामः) परेद्यवि अतन्द्रसमुद्यमं (अन्यत्र वनेषु कुटीरनिर्माणादिकार्येषु तन्द्रां विनैव औत्सुक्येन सेवानिरतमिति भावः) तं लक्ष्मणं सुनिपुणैर्वचनैः विपिनान्तरसंश्रये धृतमतं (सन्तं) समकरोत् ॥

सुचिरसंस्तवमद्रिममुं हठादनिपुणोऽपि विहातुमसौ प्रभुः ।
प्रकृतकार्यमवेत्य तमत्यजद्वरतपोरतपोषणतत्परः ॥ ११४

वरतपोरतपोषणतत्परः (इदं साभिप्रायविशेषणम्) असौ प्रभुः सुचिरसंस्तवं (चिरकालपरिचितं) अमुं अद्रिं हठात् विहातुमनिपुणोऽपि प्रकृतकार्यमवेत्य तमत्यजत् ॥

तमभिवन्द्य गिरिं समये शुभेत्त्वनुसृतः प्रियया च यवीयसा ।
धृतधनुश्शरतूणिरगात्ततो नयजुषां यजुषामपि पोषकः ॥ ११५

नयजुषां यजुषामपि पोषकः (श्रीरामः) तं गिरिं अभिवन्द्य(एतत्कालपर्यन्तं

सुसुखमात्मनः त्रयोऽपि अरक्षत् इति अनेकपवित्रतमसिद्धिक्षेत्रयुत इति च कृतज्ञतापूर्वकं गौरवसूचनार्थमभिवादनम् )शुभे समये तु प्रियया च यवीयसा च।अनुसृतः धृतधनुश्शरतूणिः (सन् ) ततः (तस्मात् गिरेः) अगात् ॥

एवं विधं गिरिमुपेक्ष्य विनिर्गतांस्तान्
दृष्ट्वात्मभाग्यहतिमात्मनि चिन्तयन्त्यः ।
हेतुं विशङ्क्य गमने वनदेवतास्ताः
दुःखेन बाष्पजलपूर्णदृशो बभूवुः ॥ ११६

एवं विधं गिरिं उपेक्ष्य विनिर्गतान् तान् दृष्ट्वा ताः वनदेवताः आत्म भाग्यहतिं आत्मनि चिन्तयन्त्यः (तेषां) गमने हेतुं विशङ्क्य दुःखेन बाष्प-जलपूर्णदृशः बभूवुः ॥

सुचिरपरिचितस्वत्यागदुःखानुयातै-
र्वनमृगविहगाद्यैः रुद्धमालोक्य मार्गम् ।
विपिनगमनवेलाबद्धसङ्घानयोध्या-
नगरजनसमूहानस्मरंस्ते त्रयोऽपि ॥११७

ते त्रयोऽपि सुचिरपरिचितस्वत्यागदुःखानुयातैः वनमृगविहगाद्यैः रुद्धं मार्गं आलोक्य विपिनगमनवेलाबद्धसङ्घान् अयोध्यानगरजनसमूहान् असमरन्

इति कथाकथनं वरवर्णनं यमकपूर्णशताधिकपद्यकम् ।
रचयतो नवकाव्यमितः कवेः गतमदस्तमदःस्तवमाद्रिमे ॥ ११८

इति (एवं चित्रकूटोदन्ते वर्णितरीत्या) कथाकथनं (कथाभागकथनपूर्वकं) वरवर्णनं (उत्तमरीत्या वर्णनसहितं) यमकपूर्णशताधिकपद्यकं इतः (अस्मात् काव्यात् ) नवकाव्यं रचयतः कवेः तं अदस्तवं (तदीयं नव्यतमं काव्यं) गत-

मदः (अहं) आद्रिये (एवमन्येपि कविवराः नवकाव्यं रचयन्त्विति प्रार्थये)

इति श्रीदाशरथिचरिते जग्गुशिङ्गरार्यविरचिते
यमकमयः चित्रकूटोदन्तोनाम-
द्वितीयः प्रपञ्चः ॥



## अथ दाशरथिचरिते तृतीयः प्रपञ्चः

ते चित्रकूटाद्रितटात्त्रयोऽमी निर्गत्य दुर्गत्यवशस्त्रभृन्नः ।
पवित्रमत्रेरुटजं प्रविष्टाः प्रापुस्सपर्यां मुनिवर्यक्लृप्ताम् ॥ १

विशत्सु विश्वप्रियकृत्सु तेषु द्राक् दण्डकारण्यमृषीन्द्रगण्यम् ।
हत्वा विराधं कृतसद्विरोधं रामोऽकरोत्तं त्रिदशाभिरामम् ॥

तृणीकृतेन्द्रोऽथ गुणी मुनीन्द्रः सदेकसङ्गश्शरभङ्गनामा ।
पर्णालयाभ्यर्णमुपेतमेनं स्तुत्वाऽप रामं सुगतिं प्रकामम् ॥

विचित्रमाहात्म्यनिधेरगस्त्यात् ब्रह्मास्त्रशक्रेषुधिविष्णुचापान् ।
लब्ध्वा सरामस्त्वथ पञ्चवट्यां गोदावरीतीरभुवि न्यवात्सीत्

कामातुरा शूर्पणखाऽत्र रामं मोहान्महात्मानमपेक्ष्य भूयः ।
सुशिक्षिताक्षेण तु लक्ष्मणेन निकृत्तनासाश्रवणाभ्यधावत् ॥

क्रन्दत्स्वसृप्रार्थनया खराख्यः सन्धुक्षितक्रोधकृशानुभीष्मः ।
चतुर्दशावृत्तसहस्रसङ्ख्यैः रक्षोबलै रामजिघृक्षयाऽऽगात् ॥ ६

अनन्यसाह्योऽयमसह्यवीर्यो रामस्त्रिशीर्षं सह दूषणेन ।
जघान निश्शेषितयातुसैन्यः खरं शरारुं तमरिं नरादम् ॥ ७

ततो जनस्थानलयात् हताशा लङ्कापुरीं शूर्पणखा प्रविश्य ।
निजाग्रजं रावणमाह सर्वं सीताङ्गसौन्दर्यमपि स्ववृत्तम् ॥ ८

स्वसुर्वचस्सर्वमसौ निशम्य यशोविनाशात्मकमात्मनोऽपि ।
अमर्षलज्जाभयरागशङ्काविकारपूर्णो हृदि रावणोऽभूत् ॥ ९

निशाचरेशस्स च गर्ह्यशौर्यः पैशुन्यशून्यं रघुपुंगवं तम् ।
रामं प्रतार्यार्यमनार्यवृत्त्या सीतां सुजातामपहर्तुमैच्छत् ॥ १०

मारीचं बहुविधरामशौर्यवाचं शोचन्तं पुनरपि तत्पुरः प्रयातुम् ।
हैरण्यं हरिणवरं प्रकल्प्य रम्यं पौलस्त्यस्तममुचदात्मनः पुरस्तात्

रामाश्रमान्तिकमुपेत्य चरत्यमुष्मिन्
सीता तमद्भुतहिरण्यमृगं विलोक्य ।
क्रीडोचितं दयित तं समुपानयेति
संप्राहिणोत् पतिमनेकविधार्थनाभिः ॥ १२ ॥

रामोऽपि चापशरपाणिरमुं चमूरुं
प्राप्तुं सुदूरमनुधाव्य यदा न लेभे ।
मायाविनं तमवधार्य जघान सोऽपि
क्रन्दन् पपात रघुनाथसमोच्चनादः ॥ १३ ॥

रामार्तनादसदृशं ध्वनिमस्य रङ्कोः
दूरान्निशम्य जनकात्मजयाऽतिभीत्या ।
संप्रेषिते पतिपथं प्रति लक्ष्मणेऽपि
प्रापोटजं दशमुखो धृतभिक्षुवेषः ॥ १४

अथ दशवदनो विगीतवृत्तो
दश च दिशोऽतिभिया मुहुः प्रपश्यन् ।

प्रसभमशरणां प्रगृह्य सीतां
जलदपथेन रथे स्थितः प्रतस्थे ॥ १५

प्रिय ! मामव हा न मेऽत्र नाथो-
ऽस्त्यधमोऽयं न जहाति रक्षताऽर्याः ।
इति तां रुदतीं बलान्नयन्तं
तमपश्यद्दिवि रावणं जटायुः॥ १६

(दिवि--आकाशे)

प्रधर्ष्य बलिनं बली सतु जटायुरुग्राग्रहात्
स्वपक्षतिहतिक्षरत्क्षतजवक्षसं राक्षसम् ।
विशीर्णरथसारथिं विकवचं विधाय क्षणात्
पतत्पतिरथापतत् तदसिकृत्तपक्षद्वयः ॥ १७ ॥

अन्यं रथं समधिरुह्य वियत्पथेन
निर्गत्य तां जनकजां दशकन्धरोऽयम् ।
लङ्कान्तरस्फुरदशोकवनस्य मध्ये
रक्षोऽङ्गनाभिरभितः कलितां ररक्ष ॥ १८

इतस्तावद्रामः कनकमृगरूपं निशिचरं
निहत्यागच्छन् द्राक् अनुजमुपयान्तं पथि पुरः ।
विलोक्यैतद्वाक्यादधिगतसतीभीतिरुटजं
द्रुतं प्रायात्पत्न्याः कुशलविषये शङ्कितमनाः ॥ १९ ॥

शून्यं निजोटजमथ प्रसमीक्ष्य हा हा
क्वासि प्रिये सुमुखि जानकि देहि वाचम् ।

इत्यार्तनादमुखरीकृतदिङ्मुखोऽयम्
भूमौ पपात रघुवंशवरो विसंज्ञः ॥ २० ॥

सौमित्रिणा रचितशैत्यचिकित्सितेन
संज्ञामवाप्य परितोऽर्पितदीनदृष्टिः ।
भूयोऽपि हन्त विललाप समुक्तकण्ठं
पाषाणमप्यतितरां द्रवयन् वनान्ते ॥ २१ ॥

हा जानकि ! क्व तव शीतलसौम्यदृष्टिः
सूक्तिश्च सा नवसुधासदृशी क्व वाऽद्य ।
याभ्यां विपत्सु मम खेदमपास्य सर्वम्
मोदार्णवे स्नपयसि स्म निरन्तरं माम् । २२ ॥

शीले कुले च विनये पतिदेवतात्वे
रूपे नये सुचरितेऽप्यथ पावनत्वे ।
वीतोपमे कथमनाथममुं विहाय
सीते गतासि समुपेहि कृपा क्व ते सा ॥ २३

नूनं क्षणार्धमपि मद्विरहासहा त्वं
कान्तारकष्टमविचिन्त्य मया सहागाः ।
एतादृशी मम निरन्तरदुःखभाजो
दौर्भाग्यतो हि सहसा विपिने प्रणष्टा ॥ २४

मूले तरोर्निवसतिः पवनातपोग्र-
वेगोऽप्यसारफलकन्ददलादिजग्धिः ।
उत्कण्टकाध्वगमनं च सुखाय सर्व-
मासीत्त्वया सह ममाद्य तु नारकस्तत् ॥ २५

किं त्वं हता वनमृगैरथ वा हृतासि
दुष्टैर्नवेत्तुमिदमस्मि सखीह शक्तः ।
आहो न चैतदुचितं ह्यनपायनी त्व-
न्नैवापयासि हृदयान्मम जात्वपि त्वम् ॥ २६

रक्षस्सहस्रहननस्य फलं ममैतत्
धिक् पौरुषं चिरहितात्मविनाशशङ्कम् ।
यद्वीक्ष्य पौरुषमदाज्जनकस्सुतां मे
जातं तदेव मम सर्वविनाशबीजम् ।। २७

जीवामि न क्षणमपि प्रियया वियुक्तो
भो लक्ष्मण ! त्वमपि याहि पुरीमयोध्याम् ।
मास्मत्कथां कथय मातृमुखेषु वत्स
कान्तारवासफलमद्य सुपूर्णमासीत् ।। २८

इत्युद्वेलविलापमग्रजमथो सौमित्रिरापत्सखः
भूयस्सान्त्ववचोभिरार्तिहरणैराश्वासयामास सः ।
श्रीरामोऽप्यथ धैर्यमाप्य कथमप्याराद्विचिन्वन्प्रियां
पत्नीवृत्तनिवेदनक्षणमृतायादाद्वये सद्गतिम् ।। २९
(व्या) (पत्नीवृत्तनिवेदनक्षणमृताय वये (पक्षिणे) सद्गतिमदात् )

सुदूरमेतौ दिशि दक्षिणस्यां वनान्यतीत्याध्वनि यातुधानीम् ।
अयोमुखीं शूर्पणखासखीं द्राक् कृत्वा ततः क्रौञ्चवनं समैताम् ॥

मुनींद्ररोषाग्निमहेन्धनीकृतः कबन्धभावाञ्चितदेहबन्धनः ।
कबन्धनामा पथि दाशरथ्योर्बबन्ध बाहायुगलेनकन्धरे ।। ३१

छित्वास्य बाहू दहनेऽपि कृत्वा शापप्रणाशान्मुदितस्य तस्य ।
गिराथ सुग्रीवकपीन्द्रसख्यं प्रेप्सू मतङ्गाश्रममभ्युपैताम् ॥ ३२

मतङ्गशिष्योत्तमया शबर्या भक्तिप्रकर्षेण कृतां सपर्याम् ।
मुदा गृहीत्वा गिरिमृश्यमूकं प्राप्तुं तदा तौ ययतुश्च पम्पाम् ॥

नानापादपसम्पूर्णपम्पाविपिनसम्पदा ।
वधूविधुरितस्याधिः मधुना विधुनाऽप्यभूत् ॥ ३४

बालिभीतरविसूनुनियुक्तो मारुतिस्तु हनुमान् यतिवेषः ।
रामलक्ष्मणसमीपमुपागादेतदाशयमथ प्रबुभुत्सुः ॥ ३५

कलितसकलवृत्तो मारुतिः स्वांसदेशे
दशरथतनयौ तौ मन्दमारोप्य धन्यः ।
तमचलमपि नीत्वा कारयामास पश्चात्
रचितभुवनसौख्यं रामसुग्रीवसख्यम् ॥ ३६

निपातितं भूषणजालमभ्रात् पत्न्याथ सुग्रीवकरेण दत्तम् ।
रामस्तदादाय सतीं स्मरन् सन् व्यथां मुदं चापि समं प्रपेदे ॥

पश्चाद्वालिविरोधहेतुमपि तच्छौर्यस्य सारं मुहुः
वक्तुः प्रत्ययमादधत् स्वसुहृदो रामस्स वीराग्रणीः ।
पादाङ्गुष्ठविनुन्नदुन्दुभितनुस्ससप्ताऽपि सालद्रुमान्
एकेनैव शरेण साद्रिकटकांश्चिच्छेद वीतश्रमः ॥ ३८

सुग्रीवमग्रे कृतसिंहनादं दृष्ट्वा नियोद्धुं समुपागतं तम् ।
रामस्ततो वालिनमप्रधृष्यं तीक्ष्णाशुगेनाशु जघान वीरः ॥ ३९

तस्यावरोधप्लवगाङ्गनानां नेत्राम्बुपूरेषु भृशं गलत्सु ।
वाली ततः प्रेतविधिक्रियाभिः सुसंस्कृतो राघवशासनेन ॥ ४०

तदनु शुभमुहूर्ते कीशसाम्राज्यलक्ष्मी-
परिणयमनुभोक्तुं योग्यमेनं कपीशम् ।
तपनतनयमार्यं तत्र सुग्रीवमन्ये
कनककलशतीर्थैरभ्यषिञ्चन् प्लवङ्गाः ॥ ४१

कालात्ययेऽप्यकृतसाह्यममुं कपीन्द्रं
क्रुद्धे प्रबोधयति संसदि लक्ष्मणेऽपि ।
श्रीरामसन्निधिमुपेत्य स कीशनाथः
सीतां विचेतुममुचत्प्लवगान् दिशासु ॥ ४२

तेषामङ्गदजाम्बवन्नलमरुत्सून्वादयो दक्षिणां
काष्ठां प्राप्य निहत्य कञ्चिदसुरं मार्गे पिपासाकुलाः ।
हेमायास्सहसा प्रविश्य विपिनं तन्मेरुसावर्णिभू-
क्लृप्तार्चां प्रतिपद्य तत्करुणया निर्जग्मुरेतद्वनात् ॥ ४३

कालातिपातभयनष्टधियस्ततस्ते
प्रायोपवेशशरणाः स्वविपत्कथासु ।
निर्यज्जटायुमृतिवाक्क्षतमानसेन
संपातिना जनकजास्थितिमध्यगच्छन् ॥ ४४

हनुमत्प्रमुखाः ततः प्रहृष्टाः समुपेत्याब्धितटे महेन्द्रशैलम् ।
जलधेस्तरणेऽथ चिन्तया ते गतवेलं व्यसनाब्धिमन्यमापुः ॥

पश्चाज्जाम्बवता स्तुतस्स हनुमानुल्लङ्घयन्नम्बुधिं
मैनाकं बहुमान्य वारि सुरसां निर्जित्य कायोच्छ्र्यात् ।
छायारोधकसिंहिकां च नखरैर्भित्वाथ लङ्कां गतो
जित्वा तत्पुरदेवतां समविशद्रात्रौ दशास्यालयम् ॥ ४६

विचित्य सर्वत्र च तत्र सीतां सुविस्मितो रावणसंपदासौ ।
भूयोऽपि चिन्ताकुलधीः स्वकार्ये ययावशोकाख्यवनं मनोज्ञम् ॥

तस्मिन् काञ्चनशिंशुपातरुतले रक्षोङ्गनाभिर्वृतां
शोकाविष्टधियं कृशां च मलिनामश्रान्तरामस्मृतिम् ।
दृष्ट्वा तद्विटपान्तराज्जनकजां रामस्य शंसन् धृतिं
सीताशोकविलोकनात् द्रुतमनास्तत्रैव तस्थौ कपिः ॥

तावत्सोऽपि दशाननस्स्मरकृशस्सीतां स्मरन् तद्वनं
प्राप्य प्रत्युषसि प्रलोभनवचः प्राह प्रकामं खलः ।
सीता दुश्श्रवगर्ह्यभाषणममुं भूयोऽभिभूयस्वयं
रक्षस्त्रीपरितर्जिताधिकशुचा मर्तुं मतिं संदधे ॥ ४९

तपस्विनीं तामथ मारुतिश्शनैर्विस्रंभयन् रामकथाभिकीर्तनैः ।
समीपमेत्याखिलवृत्तभाषणो ददौ च रामस्य शुभाङ्गुलीयकम् ॥

ततः प्रहृष्टां पुनराञ्जनेयश्चिरं समाश्वास्य यथोचितोक्त्या ।
किमप्यभिज्ञानमयाचतास्याः येनैव रामः प्रतिपत्तिमेति ॥ ५१

नासीदभिज्ञानविधौ तदास्याः चूडामणिः केवलमात्तशक्तिः ।
यच्चित्रकूटाचलकाकवृत्तं रहः प्रवृत्तं च जगाद सीता ॥ ५२

भंक्त्वाशोकवनं निहत्य समरे रक्षोधिपानक्षम-
प्याबद्धस्स्वयमिन्द्रजित्प्रणिहितात् ब्रह्मास्त्रतो मारुतिः ।
आनीतोऽथ दशाननान्तिकमसौ निन्दन् च तं रावणं
रक्षोदीपितवालपावकमहातिथ्याय लङ्कां ददौ ॥ ५३

भूयोऽपि सीतां प्रणिपत्य सिन्धुं तीर्त्वा स्वयूथे कथितात्मवृत्तः ।
हृष्टैस्ततस्तैर्मधुपानमत्तैस्समं स रामान्तिकमाससाद ॥ ५४

अथ हनूमति रामकरे मणिं जनकजार्पितमर्पयति स्वयम् ।
प्रभुरवेक्ष्य मुदा परिषस्वजे धृतमुदं तमुदन्तहरं कपिम् ॥ ५५

पश्चाद्वानरसैन्यमद्भुतबलं सङ्ख्यातिगं राघव-
स्सुग्रीवस्य निदेशतः प्रचलितं सानन्दमालोकयन् ।
सह्याद्रिं मलयाचलं च विपिनस्थानान्यतीत्य द्रुतं
पाथोधेस्सविधे महेन्द्रशिखरिप्रान्ते प्रशान्तेऽवसत् ॥ ५६

तावत् हितोक्त्याग्रजमस्तनीतिं प्रबोधयंस्तेन रुषा निरस्तः ।
उपेत्य रामं शरणं प्रपन्नो विभीषणस्त्वाग्र्यपदेऽभिषिक्तः ॥ ५७

सेतोः कृतेऽब्धिं समुपास्य पूर्वं तत्राप्रसन्ने कुपितश्च पश्चात् ।
ततः प्रसन्ने विरचय्य सेतुं नलेन सिन्धुं तमथातरत्सः ॥ ५८

पाथोनिधिं सेतुपथेन तीर्णं सुवेलशैलस्थमवेत्य रामम् ।
चिन्ताकुलः पङ्क्तिमुखो रहस्यः स्वमन्त्रिभिस्तावदमन्त्रयत्सः ॥

विद्युज्जिह्वो रावणस्याथ वाचा मायाक्लृप्तं रामशीर्षं प्रदर्श्य ।
सन्तापार्तां जानकीं मोहयित्वा तेनाप्यासीद्भग्नलङ्केशयत्नः ॥ ६०

अथ सचिवहितोक्तीस्तत्र सुग्रीवदत्तं
परिभवमपि तीक्ष्णं वालिसूनोर्वचश्च ।
मनसि परमकुर्वन् रावणो मोहमग्नः
समरमसरजेता कर्तुमेवोद्यतोऽभूत् ॥ ६१

चतुर्षु लङ्कापुरगोपुरेषु रक्षोबलस्योचितमात्मसैन्यम् ।
नियोज्य रामोऽप्यथ बाणवर्षैस्सहस्रशो यातुबलं जघान ॥ ६२

स्वसैन्यनाशात् कुपितेन्द्रजेत्रा सर्पास्त्रबद्धौ रघुनायकौ तौ ।
विमोचितौ द्राग्गरुडागमेन निजघ्नतुर्यातुबलं पुनश्च ॥ ६३

रावणस्स्वयमेवाथ सकलानीकसंयुतः ।
युद्धाय प्रययौ तुङ्गस्यन्दनस्थः पराक्रमी ॥ ६४

शरशतैरभिहत्य भयाकुलं करगलद्धनुषं च विधाय तम् ।
रघुपतिर्दशकण्ठमथात्यजत् समरतोऽमरतोषकरस्तदा ॥ ६५

स्वाग्रात्प्रबुद्धोऽग्रजभूरियत्नात् स कुम्भकर्णः कपिसैन्यहन्ता ।
गृहीतसुग्रीवविपाटितास्यो रामेण युद्धे निहतोऽस्त्रजालैः ॥ ६६

कीशोत्तमैरप्यथ सैन्यमुख्यान् विनाशितान् वीक्ष्य दशाननेऽस्मिन्
चिन्ताकुले रावणिरेत्य चक्रे मायाहवे दाशरथी विसंज्ञौ ॥ ६७

हनूमदानीतमहौषधीनां बलेन सुस्थावथ राघवौ तौ ।
निजघ्नतुरसंयति यातुवीरान् भूयोऽपि भीतिं ददतौ रिपुभ्यः ॥

राघवेण कपिभिश्च समीके संहृते सकलबन्धुकुलेऽपि ।
रावणिः पितृनिदेशवशो युद्धमद्भुततरं समतानीत् ॥ ६९

अथ जयाय विशन् स निकुम्भिलाक्रतुगृहं कृतकां हनुमत्पुरः ।
जनकजां निचकर्त सुदुष्टया प्रतिभयाऽतिभयानकचेष्टितः ॥

सुदुःखिना मारुतिनोक्तमेतत् वृत्तं निशम्यार्तिकृशेऽथ रामे ।
विभीषणोक्त्या विदितान्तरङ्गे कीशा निजघ्नुः क्रतुमिन्द्रजेतुः ॥

यज्ञे भग्ने कुपितहुतभुग्वेष्टितात्मेव रोषो-
दीप्तस्तावद्रथवरमथारुह्य शस्त्रास्त्रयुक्तः ।
खिद्यत्कीशप्रवररुदिते सङ्गरे मेघनादो
युध्वा घोरं चिरमथ हतो लक्ष्मणास्त्रेण विद्धः ॥ ७२

श्रुत्वात्मजं तं निहतं समर्थं शोचन् रुषा रामसतीं निहन्तुम् ।
समुद्यतश्चाप्तजनैर्निरुद्धः क्रुद्धोऽथ युद्धाय ययौ दशास्यः ॥ ७३

निलिम्पाक्षिश्रेणीसफलितनिमेषव्यपगमः
प्रहर्षोत्कर्षाविर्नटनगिरिशन्नारदमुनिः ।
सहैवोद्यद्गीत्यद्भुतरसविशेषव्यतिकरो
रणो रामस्यासीत्तदनु दशकण्ठेन सुमहान् ॥ ७४

व्या नटनगिरिशन्नारदमुनिः नटनेन गिरिश इव आचरन् गिरिशन् नारदमुनिः यस्मिन् सः

आविर्नटनगिरीशन्नारदमुनिः(समुद्भूतनर्तनातिशयेन गिरिशवदाचरन् नारदमुनिः रणः इत्यस्य विशेषणं अभूत पूर्वयुद्धविलोकनेन हर्षाधिक्यात् ताण्डवप्रवृत्तशङ्करवत् नारदः ननर्तेति भावः) ॥

सरावणो विंशतिबाहुसालप्रमाथिताशेषकपिप्रवीरः ।
वीराग्रगं लक्ष्मणमाशु शक्त्या प्रहृत्य संज्ञारहितं चकार ॥ ७५

पश्चान्मारुतिना समाहृतमहादिव्यौषधीनां बलात्
साकं रामशुचैव लक्ष्मणगता मूर्च्छाप्यनश्यत् क्षणात् ।
शक्रेण प्रहितं समातलिमथो दिव्यं रथं राघवोऽ-
प्यारूढो युधि रावणस्य विलयं कर्तुं मतिं सन्दधे ॥ ७६

वरप्रकर्षात् स्फुरतश्शिरस्सु कृत्तेषु रामेण दशाननस्य ।
शिरांसि नूत्नानि समुद्बभूवुः सहैव रामस्य रुषा महत्या ॥ ७७

ततो रामस्स भगवान् रावणेऽस्त्रविदुत्तमे ।
जहावमोघं ब्रह्मास्त्रं दीपिताशेषदिक्तटम् ॥ ७८

क्षीराब्धेस्तटमेत्य निर्जरगणोऽस्तावीद्यदर्थं हरिं
कीशादिष्वपि जन्म नाकनिलयाः प्रापुर्यदर्थं क्षितौ ।
कौसल्याजठराद्यदर्थमुदभून्नारायणोऽपि स्वयं
तत्सिद्धिस्समभूच्चिराद्दशमुखे ब्रह्मास्त्रविद्धे सति ॥ ७९

निर्वर्तितपितृमेधो निशिचरनेतुर्विभीषणस्सगुणी ।
लङ्कायामभिषिक्तो रामं प्रणनाम सत्यसंकल्पम् ॥ ८०

पत्नीं हुताशनमुखात्परिशुद्धशीलां
लोके प्रकाश्य सुरवर्यमुखैस्स्तुतश्च ।
आरूढपुष्पकविमानवरस्स रामः
संजीविताखिलकपिस्सकलैर्वृतोऽगात् ॥ ८१

सन्दर्शयन् सकलभूतलमात्मपत्न्यै
वृत्तानि तान्यपि वदन्नतिलङ्घिताध्वा ।
प्राग्बुद्धवृत्तभरतप्रतिपालितोऽसौ
द्राक् पुष्पकादवतरत् भरतं ददर्श ॥ ८२

प्रणतं भरतं परिरभ्य मुदा स्वयमप्यथ मातृमुखान् प्रणमन् ।
प्रकृतीरभिनन्द्य च दिव्यरथे स्थित एष ययौ रघुपस्स्वपुरम् ॥

तावद्वसिष्ठमुनिसंभृतमङ्गलार्ह-
वस्तूत्करैर्विरचितेऽखिलभद्रकार्ये ।

रामाभिषेचनमहोत्सवसंभ्रमेऽस्मिन्
सर्वे निजाभ्युदयवत्सुभृशं ननन्दुः ॥ ८४

वेगात्कपिवरानीतैः पुण्यतीर्थजलैस्ततः ।
अभिषिक्तो वसिष्ठाद्यैः श्रीरामस्सहसीतया ॥ ८५

छत्रचामरकरैरनुजैरप्याशरेशकपिनेतृमुखैश्च ।
सेवितो जनकजासहितोऽसौ राघवो विरुरुचे मणिपीठे ॥ ८६

प्रमोदोद्यत्तौर्यत्रिकरवमनोज्ञे सुसमये ।
पुरन्ध्रीभिः पूजापरिकरकराभिश्च मुनिभिः ।
कृताशीः कैकेय्या दशमुखजयस्येव रचितं
सवीरस्सन्मानं समभजत राज्यं रघुपतिः ॥ ८७

अथ रामःकपिवीरानपि सुग्रीवं विभीषणं च मुदा ।
संमान्य विसृज्यैतान् निपुणो राज्यं चिरं ररक्ष सुखात् ॥ ८८

वैकुण्ठादवतीर्य रक्षति हरौ रामाकृतौ भूतलं
किं ब्रूमो भुवने नभस्सुमसमा दुःखस्य वार्ताप्यभूत् ।
आनन्दातिशयात्प्रहृष्टमनसस्सर्वेऽपि सत्वोत्तरा
नित्यैश्वर्यसमानसौख्यमभजन् श्रीरामराज्ये जनाः ॥

रघुपतिपदसेवासक्तचित्तास्समस्ताः
तदनवधिदयायाः पात्रतां यान्तु लोकाः ।
सुकविफणितयश्च प्राप्य रामप्रसादं
दशसु च विजयन्तां दिक्षु कीर्त्या समेताः ॥ ९०

अधुनातनेन किल केनचित्कृतं
किमिहास्ति चेति कतिचिदुदासते ।

रघुनाथ राम तव वृत्तमेतदि-
त्यपरे स्तुवन्ति सकलं च तेऽर्पितम् ॥ ९१

अयि बुधागुणवीक्षणतत्पराः मम कृताविह चेद्रमणीयता ।
रसयति स्वयमेव मनांसि वो ननु गुणानुगुणा गणना कृतेः ॥

इति श्रीदाशरथिचरिते जग्गुशिङ्गरार्यविरचिते
नानावृत्तमयः श्रीरामपट्टाभिषेको नाम
तृतीयः प्रपञ्चः

॥ संपूर्णोऽयं ग्रन्थः ॥



## शोधनपत्रिका



| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५- | ७— | गृहस्तभावान्— | गृहस्थभावान् |
| ६- | ७— | सर्वत्र— | स्वर्ग |
| १३- | १४— | नगारैपम्यं- | नगरौपम्यं |
| ,, | १६— | मगि— | मणि |
| १४- | २— | रामणीयकता— | रमणीयता |
| १९- | ८— | नवधास— | नवघास |
| ,, | १५— | निवेदयन्— | निवेदयितुम् |
| २२- | ५— | रामणीयकतया— | रमणीयतया |
| ,, | १४— | सौख्यप्रद्प्रदेश- | सौख्यप्रदप्रदेशवान् |
| २५- | १— | आगमिष्येत्येव— | आगमिष्यत्येव |
| ,, | १८— | परिश्रातौ— | परिश्रान्तौ |
| ,, | १९— | अध— | अथ |
| १६ | ४— | तादकू— | तादृक् |
| २७- | ३— | शथाना— | शयाना |
| ,, | २१— | सामषि— | सामपि |
| २९- | १६— | सीताया— | सीतया |
| ,, | १९— | सौरम्य— | सौरभ्य |
| ३२- | ४— | कुपितयपि— | कुपितयापि |
| ,, | १४— | आद्रीकृत— | आर्द्रीकृता |

| पु | पं | अ | शु |
| --- | --- | --- | --- |
| ३२ | १७— | अदत्रपा— | अपत्रपा |
| ,, | ,, | भयाकुस— | भयाकुल |
| ३७ | ९— | पिशुनः— | पिशुन |
| ,, | १३— | अनुचित्त— | अनुचितः |
| ५५- | २१— | केचित्कृतं— | केनचित्कृतम् |